मीमांसान्यायप्रकाश of
आपदेव – Edited and published
by बाबू वाराणसीप्रसाद at काशी
संस्कृत प्रेस. Loose leaves
lithoprint edn.
Benares, 1875 (1932 Vikram era)

24

Bill No. 5/07-08
103
2008-0562

पचारररफराहि




# अथापोदेवीमीमांसान्यायप्रकाशःप्रारभ्यते

॥श्रीगणेशायनमः॥ यत्कृपालेशमात्रेणपुरुषार्थचतुष्टयम्॥ प्राप्यतेतमहंवंदेगोविन्दंभक्तवत्सलम्॥१॥ अनंतगुणसंपन्नमनन्तभजनप्रि
यम्॥ अनन्तरूपिणंवंदेगुरुमानन्दरूपिणम्॥२॥ इहखलुपरमकारुणिकेनभगवताजैमिन्यृषिणाऽथातोधर्मजिज्ञासेत्यादिनाद्वादशास्व =
ध्यायेषुधर्मोविचारितः तत्रवेदेनप्रयोजनमुद्दिश्यविधीयमानोऽर्थोधर्मः यथायागादिः सहियजेतस्वर्गकामइत्यादिवाक्येनस्वर्गमुद्दिश्य
विधीयते तथाहि यजेतेत्यत्रास्त्यंशद्वयंयजिर्धातुः प्रत्ययश्चतत्रप्रत्ययेऽप्यस्त्यंशद्वयम्। आख्यातत्वंलिङ्त्वंच आख्यातत्वंचदशसुल
कारेषुविद्यतेलिङ्त्वंचपुनःकेवलंलिङ्येवतत्राख्याततत्वलिङ्त्वाभ्यांभावनैवोच्यतेभावनानामभवितुर्भवनानुकूलभावुकव्यापारविशेषः
साचद्विविधाशाब्दीभावनाआर्थीभावनाचेति तत्रपुरुषप्रवृत्त्यनुकूलभावुकव्यापारविशेषः शाब्दीभावनासाचलिङ्त्वांशेनोच्यतेलिङ्
श्रवणेऽयंमांप्रवर्त्तयतिमत्प्रवृत्त्यनुकूलव्यापारवानयमितिनियमेनप्रतीयमानत्वात् ------------------- यच्चयस्मात्प्रतीयते
तत्तस्यवाच्यंयथागोशब्दस्यगोत्वंसचप्रवृत्त्यनुकूलव्यापारविशेषोलोकेपुरुषनिष्ठोऽभिप्रायविशेषःवेदेतुपुरुषाभावात् लिङादिशब्द
निष्ठएवनहिवेदःपुरुषनिर्मितः वेदस्याध्ययनंसर्वंगुर्वध्ययनपूर्वकंवेदाध्ययनसामान्यादधुनाध्ययनंयथेत्यादिनावेदापौरुषेयत्वस्य
साधितत्वात् यःकल्पःसकल्पपूर्वइतिन्यायेनसंसारस्यानादित्वादीश्वरस्यचसर्वज्ञत्वादीश्वरेणगतकल्पीयंवेदमस्मिन् कल्पेस्मृत्वाउ
पदिशतीत्येनावतैवोपपत्तौप्रमाणान्तरेणार्थमुपलभ्यरचितत्वकल्पनानुपपत्तेश्चततश्चपुरुषाभावाच्छब्दनिष्ठैवसा अतएवशाब्दी
भावनेतिव्यपदिशंतिसाचशाब्दीभावनांशत्रयमपेक्षतेसाध्यंसाधनमितिकर्त्तव्यतांचेति तत्रसाध्याकांक्षायांवक्ष्यमाणांशत्रयोपेता
ऽर्थीभावनासाध्यत्वेनसंबध्यतेएकप्रत्ययगम्यत्वेनसमानाभिधानश्रुतेः यद्यपिसंख्यादीनामप्येकप्रत्ययगम्यत्वंसमानंतथाप्ययो॰
ग्यत्वान्नतेषांभाव्यत्वेनान्वयः करणाकांक्षायांलिङादिज्ञानंकरणत्वेनसंबध्यतेतस्यचकरणत्वंनभावनोत्पादकत्वेनसन्निकर्षस्यैवरू

पादिज्ञानेसन्निकर्षात्प्राकृरूपज्ञानस्यैवलिङ्गादिज्ञानात्प्राकृशब्दधर्मभावनायाअभावप्रसंगात् किंतुभावनाभाव्यनिर्वर्त्तकत्वेनलिङ्गादिज्ञा
नेहिशब्दभावनाभाव्यार्थो भावनांनिर्वर्तयतिकुठारइववृक्षछेदनमतोलिङ्गादिज्ञानस्यकरणत्वेनान्वयइतिकर्त्तव्यताकांक्षायांप्राशस्त्यज्ञान
मितिकर्त्तव्यतात्वेनसंबध्यतेतच्चप्राशस्त्यज्ञानंवायुर्वैक्षेपिष्ठादेवतेत्यर्थवादैर्जन्यतेतेत्वर्थवादाःस्वार्थप्रतिपादनेप्रयोजनमनुपलभ
मानालक्षणयाक्रतोःप्राशस्त्यंप्रतिपादयंतिस्वार्थमात्रपरत्वेआनर्थक्यप्रसंगात् नचेष्टापत्तिरध्ययनविध्युपात्तत्वेनानर्थक्यानुपपत्तेः॥
तथाहि स्वाध्यायोध्येतव्यइत्यध्ययनविधिः सकलस्यवेदस्याध्ययनकर्त्तव्यतांबोधयन्सर्वोवेदःप्रयोजनवदर्थपर्यवसायीतिसूचयति
निरर्थकस्याध्ययनानुपपत्तेः सचवेदोविधिमंत्रनामधेयनिषेधार्थवादात्मकःतत्रविधिःप्रयोजनवदर्थविधानेनार्थवान् सचाप्राप्तमर्थं
विधत्तेयथाऽग्निहोत्रंजुहुयात्स्वर्गकामइतिविधिरप्राप्तंप्रयोजनवद्धोमंविधत्तेअग्निहोत्रहोमेनस्वर्गंभावयेदितियत्रतुकर्म्मप्रकारा
न्तरेणप्राप्तंतत्रतदुद्देशेनगुणमात्रविधानम्॥यथादध्नाजुहुयादित्यत्रहोमस्याग्निहोत्रंजुहुयादित्यनेनप्राप्तत्वाद्धोमोद्देशेनदधिमा
त्रविधानम्।दध्नाहोमंभावयेदिति।यत्रतूभयमप्राप्तंतत्रविशिष्टंविधत्ते।तदुक्तं।नचेदन्येनशिष्टाइति शिष्टाउपदिष्टाइत्यर्थः।यथा
सोमेनयजेतेत्यत्रसोमयागयोरप्राप्तत्वात्सोमविशिष्टयागविधानंसोमवतायागेनेष्टंभावयेदितिनचोभयविधानेवाक्यभेदः विशि
ष्टस्यैकत्वात् विशिष्टविधौचमत्वर्थलक्षणायथासोमपदेनमत्वर्थो लक्ष्यतेसोमवतेतिनहिमत्वर्थलक्षणांविनासोमस्यान्वयः संभवति
यदि तावत्सोमयागयोरैक्यरूपेणभावनायांकरणत्वेनैवान्वयः। सोमेनयागेनेष्टंभावयेदितिनतउभयविधानेवाक्यभेदः सोम
स्ययागवत्फलभावनाकरणत्वेनप्राधान्यापातश्चयागार्थत्वानुपपत्तिश्चयागेद्रव्यानुपपत्तिश्चप्रत्ययवाच्यभावनायाः समानपदो
पात्तेनयागेनकरणाकांक्षानिवृत्तत्वेनभिन्नपदोपात्तस्यसोमस्यकरणत्वेनान्वयानुपपत्तिश्चस्यात् यदिचवैयधिकरण्येनान्वयः

न्या.मी तत्र न तावद्यागेन सोममित्यन्वयः समानपदोपात्तत्वात्प्रत्ययवाच्यफलभावनाकरणत्वेनान्वितस्य यागस्य सोमकर्मभावनान्वया
२ नुपपत्तेः॥ यागस्य सोमार्थत्वापत्तेश्च न चेष्टापत्तिरदृष्टद्वयापत्तेः नहि यागस्य सोमार्थत्वं दृष्टद्वारेण संभवति व्रीहिषु अवघातेनेव या
गेन सोमे कस्यचिद्दृष्टस्याजननात् अतस्तेन तावत्सोमे किंचिददृष्टं जननीयं प्रोक्षणेनेव व्रीहिषु तथा यागस्य सोमार्थत्वे फलभावनायां
सोमस्य करणत्वेनान्वयो वक्तव्यः भावनाकरणत्वं च भावनाभाव्यनिर्वर्तकत्वेनेत्युक्तम्। न च सोमोऽदृष्टमंतरेण फलं जनयितुं समर्थः अ
हेर्जुहोतीति वाक्यविहितहोमेन तस्य भस्मीभावात् अतो दृष्टद्वयापातान्न यागस्य सोमार्थत्वमिति न यागेन सोमं भावयेदित्यन्वयः संभव
ति करणत्वेनोपस्थितस्य सोमस्य साध्यत्वेनान्वयानुपपत्तेश्च। अथ सोमेन यागं भावयेदित्यन्वयः तत्र यद्यपि सोमस्य करणत्वेन यागार्थत्वा
द्यागनिर्वृत्तिरिष्टमेव प्रयोजनं लभ्यत इति नादृष्टद्वयापत्तिः। नापि करणत्वेनोपस्थितस्य सोमस्य साध्यत्वान्वयानुपपत्तिः। करणत्वेनैवान्वया
त्। तथाप्यप्राप्तत्वाद्भावनाकरणत्वेनान्वितस्य यागस्य साध्यत्वेनान्वयानुपपत्तिस्तदवस्थैव ननु यजेतेत्यत्र यागस्य न करणत्वेन नापि
साध्यत्वेनोपस्थितिः तद्वाचकतृतीयादिअभावात् किंतु भावनायां यागसंबंधमात्रं प्रतीयते यागस्य च भावनासंबंधः करणत्वेन साध्यत्वे
न च संभवति तत्र करणत्वांशमादाय फलसंबंधः। साध्यत्वांशमादाय गुणसंबंधश्च स्यादिति चेन्नैवं यद्यपि भावनया यागस्य संबंधमात्रं
प्रतीयते तथापि करणत्वेनोपस्थितिदशायां न साध्यत्वेनोपस्थितिः संभवति विरोधात् तदवश्यं यागेन स्वर्गं भावयेदिति करणत्वेनान्वये स
ति पश्चात्सोमेन यागं भावयेदिति साध्यत्वेनान्वयो वक्तव्यः ततश्च वाक्यभेदः न च प्रत्ययाभिहितभावनास्वरूपे यागस्वरूपमात्रमन्वेती
ति वक्तुं युक्तं कारकाणामेव क्रियान्वयात्। तत्सिद्धं सोमस्य न यागेन सामानाधिकरण्येन वैयधिकरण्येन वा अन्वयः संभवतीति। ननु यजेतेत्य राम
त्र प्रत्ययाभिहितभावनायाः करणाकांक्षायां यथा यागः करणत्वेनान्वेति तथेति कर्तव्यताकांक्षायां सोमस्येतिकर्तव्यतात्वेन भावनायामे २

वान्वयोस्तु किंमत्वर्थलक्षणयेतिचेन्नैवं सोमेनेतितृतीययाकरणत्ववाचिन्यासोमस्येतिकर्त्तव्यतात्वानभिधानात् तत्रयदि इतिकर्त्तव्य
नात्वंलक्षणयोच्यतेततोवरंसोमपदएवप्रकृतिभूतेमत्वर्थलक्षणा गुणेत्वन्याय्यकल्पनेतिन्यायात् ॥अथवेदोवाम्नायदर्शनादित्यधिक
रणोक्ताःसंजातविरोधित्वन्यायेनान्त्येप्रत्ययएवलक्षणेतिचेत्तथापिसोमस्येतिकर्त्तव्यतात्वेनान्वयानुपपत्तिः सिद्धस्यवस्तुन इतिकर्त्त
व्यतात्वाभावात् क्रियायाएवेतिकर्त्तव्यतात्वात् द्रव्यस्यकेवलमंगत्वात्तत्रएवेतिकर्त्तव्यतात्वाभावात् द्रव्यस्यप्रकरणादग्रहणं। य
थाहुः नावांतरक्रियायोगात् ऋतेवाक्योपकल्पितात् गुणद्रव्येकथंभावैर्गृण्हीतिप्रकृताः क्रियाइतितदेतदग्रेवक्ष्यामः। किंचसोमेनय
जेतेतिहियागस्योत्पत्तिवाक्यंनाधिकारवाक्यंज्योतिष्टोमेनस्वर्गकामोयजेतेत्यस्याधिकारवाक्यत्वात् उत्पत्तिवाक्येचनेतिकर्त्तव्यता
कांक्षादृष्टविशेषाकांक्षाकलुषितत्वेनेतिकर्त्तव्यताकांक्षायाविस्पष्टानुत्थानात्। तत्सिद्धंसोमस्येतिकर्त्तव्यतात्वेनभावनायामन्वयः
तस्माद्विशिष्टविधावन्वयानुपपत्त्यावश्यंमत्वर्थलक्षणावाच्येति। नन्वेवमपिसोमेनयजेतेत्यत्रनविशिष्टविधानंगौरवात् मत्वर्थलक्षणा
पाताच्च किंतुदध्नाजुहोतीतिवद्गुणमात्रविधानमस्तु विधिशक्तेर्गुणेसंक्रमात् यथाहुः सर्वत्राख्यातसंबद्धे श्रूयमाणेपदान्तरे विधिशक्तेरु
पसंक्रान्तेः स्याद्धातोरनुवादतेति नचयागस्याप्राप्तत्वान्नतदुद्देशेनसोमविधानमितिवाच्यं। ज्योतिष्टोमेनस्वर्गकामोयजेतेत्यनेनयागः
स्यप्राप्तत्वात् नचास्याधिकारविधित्वेननोत्पत्तिविधित्वमितिवाच्यम्। उद्भिदायजेतपशुकामइतिवदेकस्यैवोभयविधित्वोपपत्तेः एवंच
सोमेनयजेतेत्यत्रनमत्वर्थलक्षणा यदित्वत्रविशिष्टविधानंस्यात्तदान्वयानुपपत्त्यामत्वर्थलक्षणास्यात् ज्योतिष्टोमेनस्वर्गकामोयजे
तेत्यत्रतुयागविधानेक्वचिन्नमत्वर्थलक्षणा नतावदेतस्मिन्वाक्येज्योतिष्टोमेनयागेनस्वर्गंभावयेदितिसामानाधिकरण्येनैवनामपद
स्यान्वयात् नापिसोमेनयजेतेत्यत्रयागोद्देशेनसोमविधानात् सोमेनयागंभावयेदिति। नन्वनुवादेप्यस्तिमत्वर्थलक्षणा अतएवोक्तं

विधानेवानुवादेवा यागः करणमिष्यते तत्समीपेनृतीयान्तस्तद्वाचित्वंनमुंचतीति अतश्चविशिष्टविधावपिगुणविधानेप्यस्त्येवमत्वर्थलक्षणेः
तिचेन्नैवं गुणान्वयानुपपत्याहिमत्वर्थलक्षणांगीक्रियते यदाचभावनायांधात्वर्थस्यकरणत्वेनान्वयस्तदान्वयानुपपत्यासांगीकर्त्तव्यागुण
विधौचनधात्वर्थस्यकरणत्वेनान्वयोमानाभावात् नहिदध्नाजुहोतीत्यत्रहोमस्यकरणत्वंश्रूयते तद्वाचकतृतीयाद्यभावात्कल्प्यते इतिचे
न्नगुणस्यतत्रविधित्सितत्वेनसाध्याकांक्षायांसाध्यत्वकल्पनायाएवोचितत्वात् दध्नाहोमंभावयेदिति नचायमस्तिनियमोभावनायां
धात्वर्थस्यकरणत्वेनैवान्वयोनप्रकारान्तरेणेतिषष्ठाद्यपूर्वपक्षानुत्थानापत्तेः षष्ठाद्येहियजेतस्वर्गकामइत्यादौप्रत्ययवाच्यायांवक्ष्य
माणार्थीभावनायांसमानपदश्रुत्यायागस्यभाव्यत्वमाशंक्यापुरुषार्थत्वेनपरिहृतंयदिच धात्वर्थस्यकरणत्वेनैवभावनायामन्वय
स्तदाभाव्यत्वशंकैवनोदतीतिव्यर्थषष्ठाद्यमधिकरणमापद्येत किंचवाजपेयाधिकरणेतत्रसंबंधमाशंक्यपरिहृतः धात्वर्थस्यकर
णत्वेनैवान्वयेतत्रसंबंधशंकैवनस्यात् नत्रतत्रसंबंधशंकापरिहारौचव्याख्यातौ किंचनधात्वर्थस्यकरणत्वेनैवान्वयः गुणकामाधि
करणेआश्रयत्वेनधात्वर्थान्वयस्योक्तत्वात् तथाहिदध्नेंद्रियकामस्यजुहुयादित्यत्रनतावद्धोमोविधीयतेतस्यवचनांतरेणविहि
तत्वात् नापिहोमस्यफलसंबंधः गुणपदानर्थक्यापत्तेः नापिगुणसंबंधंविधत्तेफलपदानर्थक्यापातात् नाप्युभयसंबंधंविधत्तेप्राप्ते
कर्मण्यनेकविधानेवाक्यभेदापत्तेः यथाहुः प्राप्तेकर्मणिनानेकोविधातुंशक्यतेगुणः अप्राप्तेतुविधीयंतेबहवोप्येकयत्नतइति अत्र
चकर्मपदवत्गुणेत्युपलक्षणं। एकोद्देशेनानेकविधानेवाक्यभेदात् अतएवग्रहैकत्वाधिकरणेग्रहंसंमार्ष्टीत्यत्रग्रहोद्देशेनएक
त्वसंमार्गविधौवाक्यभेदात्ग्रहैकत्वमविवक्षितमित्युक्तं रेवत्यधिकरणेचएतस्यैवरेवतीषुवारवन्तीयमग्निष्टोमसामकृत्वापशु
कामोह्येतेनयजेतेत्यत्रवारवन्तीयस्यरेवतीसंबंधेअग्निष्टोमसामसंबंधेफलसंबंधेचविधीयमानेवाक्यभेदाद्भावनोपसर्जनंभावनां

तरं विधीयते इत्युक्तं तस्मात्प्राप्ते होमे नोभयविधानं संभवति नापि होमांतरं विधीयते गौरवात् प्रकृतहानाप्रकृतकल्पनाप्रसंगात् मत्वर्थलक्षणाप्रसंगाच्च नापि दध्येव केवलं करणत्वेन विधीयते इति युक्तं केवलस्य व्यापारानाविष्टस्य करणत्वानुपपत्तेः ------------
------------------ कर्तृव्यापारव्याप्यत्वनियमात्करणत्वस्य किं तर्हि विधीयते इति चेत् दध्नेति तृतीययोपात्तं दधिकरणत्वं फलभावनायां करणत्वेन विधीयते प्रत्ययार्थत्वेन तद्बोधितस्य प्राधान्यात् एवं च दधिकरणत्वेनेंद्रियं भावयेदिति वाक्यार्थः करणत्वं च किंप्रतियोगिकमित्यपेक्षायां सन्निधिप्राप्तो होम आश्रयत्वेन संबध्यते ततश्च सिद्धो धात्वर्थस्याश्रयत्वेनान्वयः प्रकृतमनुसरामः तत्सिद्धं धात्वर्थस्य न करणेनैवान्वय इति किं तर्हि क्वचित्करणत्वेन क्वचित्साध्यत्वेन क्वचिदाश्रयत्वेनेति गुणविधौ च साध्यत्वेनैवान्वयः संभवतीति न मत्वर्थलक्षणया प्रयोजनं किंच गुणविधौ मत्वर्थलक्षणायां गुणस्य धात्वर्थांगत्वे किं मानमिति वक्तव्यं न तावच्छ्रुतिः मत्वर्थलक्षणयां तृतीयाश्रुतेर्मत्वर्थस्यैवांगत्वे मानं स्यात् न गुणस्यांगत्वे समभिव्याहारात्मकं वाक्यमिति चेन्न किं स्वतंत्रमेव मानमुत लिंगश्रुती कल्पयित्वा नाद्यः॥ बलाबलाधिकरणविरोधात् तत्र हि वाक्यं लिंगश्रुती कल्पयित्वांगत्वे मानमित्युक्तम् द्वितीये प्रत्यक्षां श्रुतिमुत्सृज्य श्रुत्यंतरकल्पने तस्या एव वा आवृत्तिकल्पने व्यर्थः प्रयासः समाश्रितः स्यात् विशिष्टविधौ त्वगत्या तदाश्रयणं किंच भवतु श्रुत्यंतरकल्पनं तथापि तत्सहकृतः प्रत्यक्ष एव वा विधिर्धात्वर्थांगत्वेन गुणं विधत्ते उत कल्पितविध्यंतरं कल्पितमिति चेन्न श्रुतविधेर्व्यर्थतापत्तेः नहि तेन तदा गुणो विधीयते कल्पितविध्यंतरांगीकारात् नापि धात्वर्थः तस्य वचनांतरेण विहितत्वात् अथ श्रूयमाण एव विधिः कल्पितश्रुतिसहकृतो धात्वर्थांगत्वेन गुणं विधत्ते इति चेत्। तर्हि तत्र कथं धात्वर्थस्यान्वयः करणत्वेनेति चेन्न अन्वयानुपपत्तेः नहि संभवति दध्ना होमेनेति चान्वयः साध्यत्वेनैवान्वयो दध्ना होमं भावयेदिति चेन्न तथा सत्यनुवादेऽपि धात्वर्थः करणत्वेनैवान्वेतीत्येतदुपेक्षि–

तंस्यात्। विवक्षितवाक्यार्थश्चविनैवमत्वर्थलक्षणयांगीकृतःस्यात् तस्मान्नगुणविधौमत्वर्थलक्षणायत्तुविधानेवानुवादेवेतिवार्त्ति
कंतत्प्रतीतिमवलंब्यनवस्थागतिं तथाहि यावद्धिअग्निहोत्रंजुहुयादितिवाक्यंनालोच्यते केवलंचदध्नाजुहोतीतिवाक्यमालोच्यते
तदाषष्ठाद्यन्यायेनहोमस्याभाव्यतांजानतांप्रतिपदाधिकरणभावार्थाधिकरणवासनावासितानांभवत्येतादृशीमतिः यद्दधिम
ताहोमेनेष्टंभावयेदितिप्रतिपदाधिकरणेहिसोमेनयजेतेत्यादिषुकिंगुणधात्वर्थयोःफलभावनाकरणत्वेनान्वयःउतएकस्यैवेतिसं
दिह्यप्रधानसंबंधलाभात् विनिगमनाविरहाच्चसर्वेषांफलभावनाकरणत्वेनान्वयमाशंक्यलाघवादेकस्यैवभावनाकरणत्वमित्यु
क्तंभावनाकरणत्वंहिभावनाभाव्यनिर्वर्त्तकतयाभाव्यंचस्वर्गादिनादृष्टमंतरेणेति अनेकेषांकरणत्वेऽनेकादृष्टकल्पनाप्रसंगात् त
स्मादेकस्यैवकरणत्वेयद्यप्येकस्यतदापिकिंद्रव्यगुणयोःफलभावनाकरणत्वमुतधात्वर्थस्येतिभावार्थाधिकरणेसंदिह्यद्रव्यगुण
योरेवभावनाकरणत्वंभूतंभव्यायोपदिश्यतेइति न्यायादित्याशंक्यधात्वर्थस्यैवभावनाकरणत्वंपदश्रुतेर्बलीयस्त्वादित्युक्तं अ
तश्चसिद्धमेतद्वाक्यांतरानालोचनदशायांगुणविधावपिधात्वर्थस्यकरणत्वाशंकायांगुणपदेमत्वर्थलक्षणेति यदात्वग्निहोत्रंजुहो
तीति होमविधायकंवाक्यान्तरमालोच्यतेतदाहोमस्यवाक्यांतरेणैवविहितत्वात्तदुद्देशेनगुणमात्रंविधी--------
यतइत्यालोचनान्नमत्वर्थलक्षणेति। अतएवोक्तंपार्थसारथिमिश्रैराघाराग्निहोत्राधिकरणेफलतोगुणविधिरयंनप्रतीततइति
यद्वा एतद्वार्तिकमधिकारविध्यभिप्रायं। उद्भिदायजेतेत्यादीनामधिकारात् तत्रहियागोविधीयतामुत्पत्तिवाक्यसिद्धोवानूद्यतामुभय
थापिकरणत्वेनान्वयात् तृतीयांतस्यतद्वाच्यत्वं। अन्यथाऽन्वयानुपपत्तेरिति तस्माद्गुणविधौविनापिमत्वर्थलक्षणयाअन्वयोपप
त्तेर्नमत्वर्थलक्षणेति अतश्चसोमेनयजेतेत्यत्रनविशिष्टविधानंकिंतुगुणमात्रविधानंयागस्तुज्योतिष्टोमेनस्वर्गकामोयजेतेत्येतस्मि राम

न्वाक्ये विधीयत इत्येव युक्तम्। अन्यथा मत्वर्थलक्षणापत्तेरिति अत्रोच्यते यद्यपि यागोद्देशेन सोमविधौ न मत्वर्थलक्षणा तथापि यागस्याप्राप्तत्वा
त्सोमेन यजेतेत्यत्र न यागोद्देशेन सोमविधानं संभवति नच ज्योतिष्टोमेनेत्यादिना प्राप्तत्वात्तदुद्देशेन गुणमात्रं विधीयत इति वाच्यम्। तस्याधि
कारविधित्वेनोत्पत्तिविधित्वानुपपत्तेः कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः तेन च विहितस्य कर्मणः फलविशेषसंबंधमात्रमधिकारविधि
ना क्रियते फलविशेषसंबंधबोधकस्याधिकारविधित्वात् यथा आग्नेयोऽष्टाकपालो भवतीत्येन हि विहितस्य कर्मणः फलविशेषसंबंधमात्रं द
र्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति वाक्यं विधत्ते तस्याधिकारविधित्वं नोत्पत्तिविधित्वं स्यादेनत् दर्शपूर्णमासाभ्यामित्येतस्य नोत्पत्तिविधित्वं
संभवति आग्नेयोऽष्टाकपाल इत्यादिवाक्यानर्थक्यापत्तेः न हि तेन तदा कर्म विधीयते तस्य दर्शपूर्णमासाभ्यामित्यनेन विहितत्वात् नापि गुण
विधानं संभवति प्राप्ते कर्मणि अनेकगुणविधाने वाक्यभेदापत्तेः अत आग्नेयोऽष्टाकपाल इत्यस्योत्पत्तिविधित्वं दर्शपूर्णमासाभ्यामित्यस्य चाधि
कारविधित्वं युक्तम्। ज्योतिष्टोमेनेत्यस्याधिकारविधेरुद्भिदा यजेत पशुकाम इत्यादिवदुत्पत्तिविधित्वे स्वीक्रियमाणे न कस्यचिदानर्थक्यं सोमे
न यजेतेत्यस्य गुणविधित्वात् यागोद्देशसोममात्रविधानाच्च न वाक्यभेद इति चेन्नैवं यद्यपि सोमेन यजेतेत्यत्र लाघवान्न वाक्यभेदः तथा
पि ज्योतिष्टोमेनेत्यस्मिन्वाक्ये कर्मस्वरूपे तस्य च फलसंबंधे विधीयमाने गौरवलक्षणो वाक्यभेदोऽस्त्येव सोमेन यजेतेत्येतद्वाक्यविहितक
र्मणः फलसंबंधमात्रविधाने तदभावात् उद्भिदा यजेतेत्यत्र तु वचनान्तराभावेनागत्या तदाश्रयणम्। न च सोमेन यजेतेत्यत्रापि कर्मस्वरूपे
गुणे च विधीयमाने वाक्यभेदः स्यादिति वाच्यम् श्रूयमाणेन विधिना गुणस्याविधेयत्वात्॥ विशेषणविधेरार्थिकत्वात् सर्वत्र हि विशिष्टवि
धौ विशेषणविधिरार्थिकः ज्योतिष्टोमेनेत्यस्य तूत्पत्तिविधित्वे कर्मस्वरूपं फलसंबंधश्चेति श्रूयमाणेनैव विधिना विधातव्यमिति दृढो गौर
वलक्षणो वाक्यभेदः यथाहुः श्रौतव्यापारनानात्वे शब्दानामतिगौरवं एकोक्त्यवसितानां तु नार्थाक्षेपो विरुध्यत इति न च सोमेन यजेते

न्या॰मी॰ त्यस्योत्पत्तिविधित्वे यद्यपि न वाक्यभेदः तथापि मत्वर्थलक्षणा स्यादेवेति वाच्यम्॥ तस्याः स्वीक्रियमाणत्वात् लक्षणातो वाक्यभेदस्य ज
५ घन्यत्वात् लक्षणा हि पददोषो वाक्यभेदस्तु वाक्यदोषः पदवाक्यदोषयोर्मध्ये पदस्यैव दोषकल्पनाया उचितत्वात् गुणे त्वन्याय्यकल्पने
ति न्यायात् अत एव जातपुत्रः कृष्णकेशोऽग्नीनादधीतेत्यत्राधानानुवादेन जातपुत्रत्वकृष्णकेशत्वविधाने वाक्यभेदात्तद्द्वयाभ्यामव
स्थाविशेषो लक्ष्यत इत्युक्तम् तस्माद्वाक्यभेदप्रसक्तौ लक्षणैव स्वीकार्य्या तस्मात्सोमेन यजेतेत्ययमेवोत्पत्तिविधिर्न ज्योतिष्टोमेनेत्ययम्
गौरवलक्षणवाक्यभेदापत्तेः किंच सोमेन यजेतेत्यत्र यागविधाने श्रुत्यर्थविधानं स्यात् गुणविधाने तु वाक्यार्थविधानं तच्च श्रुत्यर्थविधा
ने संभवेऽयुक्तम् यथाहुः वाक्यार्थविधिरन्याय्यः श्रुत्यर्थविधिसंभवे इति वाक्यार्थः पदान्तरार्थ इत्यर्थः ज्योतिष्टोमेनेत्यत्रापि फलोद्दे
शेन यागस्यैव विधानान्न वाक्यार्थविधानम् तदुत्पत्तिविधित्ववादिनापि तदंगीकाराच्च तस्मात् ज्योतिष्टोमेनेत्ययमधिकारविधिरेव अपि
च कर्मस्वरूपविधिस्तत्र स्वीकार्य्यो यत्र कर्मणो रूपमुपलभ्यते यागस्य च द्वे रूपे द्रव्यं देवता चेति सोमेन यजेतेत्यत्र यद्यपि देवता नोपल
भ्यते सोमयागस्याव्यक्तत्वात् अव्यक्तत्वं च स्वार्थचोदितदेवताराहित्यम् ननु देवताराहित्यमात्रे ऐन्द्रवायवं गृह्णातीत्यादिवाक्यवि
हितग्रहदेवतानां सत्त्वात् ग्रहणार्थाभिरपि देवताभिः प्रसंगतो यागोपकारस्य क्रियमाणत्वात्। तथापि द्रव्यमुपलभ्यत एव तेनापि या
गस्वरूपज्ञानं तु शक्यमेव ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र च न द्रव्यं देवता वा श्रूयते अतस्तस्योत्पत्तिविधित्वे यागविशेषज्ञानं या
गसामान्यस्याविधेयत्वात् विशेषस्यैव विधेयत्वादित्यादि क्लेशेन स्यात् अतो नायं कर्मोत्पत्तिविधिः नन्वेवमपि अग्निहोत्रं जुहोती
त्ययमपि होमोत्पत्तिविधिर्न स्यात् रूपाश्रवणात् तच्छ्रवणाच्च दध्ना जुहोतीत्ययमेवोत्पत्तिविधिः स्यात् तथा चाघाराग्निहोत्राधिकरणवि राम
रोधः तत्र हि अग्निहोत्रं जुहोतीत्यस्योत्पत्तिविधित्वं दध्ना जुहोतीत्यादीनां च गुणविधित्वमुक्तमिति चेत्सत्यम् अग्निहोत्रं जुहोतीत्यत्र ५

द्यपि रूपं नोपलभ्यते अग्निहोत्रशब्दस्य तत्प्रख्यन्यायेन नामधेयत्वात् तदेतदग्रे वक्ष्यामः तथापि तस्योत्पत्तिविधित्वं स्वीक्रियते अन्यथा ध
नर्थक्यापत्तेः दध्नाजुहोतीत्यस्य च नानर्थक्यं गुणविधित्वात् अत अग्निहोत्रंजुहोतीत्ययं कर्मोत्पत्तिविधिरिति युक्तम् ज्योतिष्टोमेनेत्यस्य च
नानर्थक्यमधिकारविधित्वोपपत्तेः अतः किमर्थं संभवति रूपवति वाक्ये कर्मविधाने तद्रहिते तत्स्वीकार्यं किं च दध्नाजुहोतीत्यस्य कर्मोत्प
त्तिविधित्वे पयसाजुहोत्यनेनैतत्कर्मानुवादेन न पयो विधातुं शक्यते उत्पत्तिशिष्टदध्यवरोधात् उत्पत्तिशिष्टगुणावरुद्धे हि न गुणान्तरं वि
धीयते आकांक्षाया उत्पत्तिशिष्टेनैव निवृत्तत्वात् अतस्तेनापि शिष्टं कर्मान्तरं विधेयं तथा चानेकादृष्टकल्पनागौरवम् अग्निहोत्रंजु
होतीत्य— स्य तु उत्पत्तिविधित्वे एतद्वाक्यविहितस्य कर्मणो द्रव्याकांक्षायां युगपदेव खलेकपोतन्यायेन दध्नाजुहोति पयसाजुहोतीत्या
दिवाक्यैर्गुणा विधीयंते इति नानेकादृष्टकल्पनागौरवम् अतोऽग्निहोत्रंजुहोतीत्ययमुत्पत्तिविधिः। पयसाजुहोतीत्यादयस्तु गुणविधय
इति युक्तं सोमेन यजेतेत्यत्र रूपवति वाक्ये कर्मोत्पत्तिविधाने स्वीक्रियमाणे न किंचिद्दूषणं पक्षद्वयेप्येकस्यादृष्टस्य तुल्यत्वात् तस्माद्यु
क्तम् सोमेन यजेतेत्ययमेवोत्पत्तिविधिरित्यलमनया विधिनिरूपणानुगतप्रपंचनिरूपणचिंतया प्रकृतमनुसरामः तत्सिद्धं विधिः प्र
योजनवंतमप्राप्तार्थं विधत्ते इति ॥ ० ॥ स च विधिश्चतुर्विध उत्पत्तिविधिर्विनियोगविधिरधिकारविधिः प्रयोगविधिश्चेति तत्र कर्मस्वरूपमा
त्रबोधको विधिरुत्पत्तिविधिः यथाऽग्निहोत्रंजुहोतीति उत्पत्तिविधौ च कर्मणः करणत्वेनैवान्वयः होमेनेष्टं भावयेदिति न तु होमं कु
र्यादिति साध्यत्वेन सत्यासति साध्यस्य साध्यान्तरान्वयायोगेनाधिकारवाक्यगतफलसंबंधो न स्यात् करणत्वेन त्वन्वये होमेनेष्टं
भावयेत्किं तदिष्टमित्याकांक्षायां फलविशेषसंबंधो घटते न चोत्पत्तिविधाविष्टवाचकपदाभावेन कर्मणा इष्टं भावयेदिति कथं वाक्या
र्थ इति वाच्यम् विधिश्रुतेरेवेष्टबोधकत्वात् सा हि पुरुषार्थं पुरुषं प्रवर्त्तयंती कर्मणः फलसंबंधमात्रं बोधयति तस्माद्युक्तमुत्पत्ति

विधौ कर्मकरणत्वेनान्वेतीति अतएवोद्भिदा यजेतेत्यादौ तृतीयान्तः उद्भिच्छब्द उपपद्यते उद्भिदा यागेन भावयेदित्यन्वयोपपत्तेः ये
षामपीष्टसाधनत्वं लिङर्थस्तेषामपि तृतीयान्तानां कर्मनामधेयानामन्वयोनुपपन्न एव न हि संभवति याग इष्टसाधनमुद्भिदेति तृतीयो
पात्तस्य कारकस्य लिंगसंख्यान्वयायोग्यस्य क्रियायैवान्वयात्। ननु तथाप्यग्निहोत्रं जुहोतीत्यादिषु कर्मोत्पत्तिविधिषु द्वितीयान्ता
नां कर्मनामधेयानामन्वयोनुपपन्नः न हि संभवति होमेन भावयेदग्निहोत्रमिति सत्यं श्रूयमाणानां द्वितीयाऽर्थासिद्धसाध्यत्वानु
वादिका होमस्य हि करणत्वेनान्वयात् असाधितस्य करणत्वानुपपत्तेः तस्याश्चानन्वयोपस्थितौ सा सक्तून् जुहोतीतिवत्तृती
यार्थं लक्षयति अग्निहोत्रेण होमेनेष्टं भावयेदित्युक्तं पार्थसारथिमिश्रैः अतश्च द्वितीयान्तानां कर्मनामधेयानामन्वयो नानुपपन्नः त
त्सिद्धं उत्पत्तिविधौ कर्मकरणत्वेनान्वेतीति ॥ ० ॥ अंगप्रधानसंबंधबोधको विधिर्विनियोगविधिः यथा दध्ना जुहोतीति स हि तृती
याप्रतिपन्नांगभावस्य दध्नो होमसंबंधं विधत्ते दध्ना होमं भावयेदिति एतस्य विधेः सहकारिभूतानि षट्प्रमाणानि श्रुतिलिंगवाक्यप्रक
रणस्थानसमाख्यारूपाणि एतत्सहकृतेन विनियोगविधिनांगत्वं परोद्देशप्रवृत्तकृतिव्याप्यत्वरूपं परार्थ्यापरपर्यायं ज्ञाप्यते तत्र नि
रपेक्षो रवः श्रुतिः सा च त्रिविधा विधात्री अभिधात्री विनियोक्त्री चेति तत्र विधात्री लिङाद्यात्मिका अभिधात्री व्रीह्यादिश्रुतिः यस्य
च शब्दस्य श्रवणादेव संबंधः प्रतीयते सा विनियोक्त्री सा च त्रिधा विभक्तिरूपा समानाभिधानरूपा एकपदरूपा तत्र विभक्तिश्रुत्यां
गत्वं यथा व्रीहिभिर्यजेतेति तृतीयाश्रुत्या व्रीहीणां यागांगत्वं न चोत्पत्तिशिष्टपुरोडाशावरुद्धे यागे कथं व्रीहीणामंगत्वमिति वाच्यं
पुरोडाशप्रकृतितयोपपत्तेः पशोरिव हृदयादिरूपहविःप्रकृतितया यागांगत्वम् ॥ न च साक्षात्पशोरेवांगत्वं किं न स्यादिति वा
च्यम् तस्य विशसनात् अवदीयमानत्वाच्च हृदयादीनाम् अवदीयमानं हि हविः यथा पुरोडाशादिमध्यात्पूर्वार्धाच्चावद्यतीति वा

स्यात् हृदयादीनि चावदीयमानानि न पशुः हृदयस्याग्रेऽवद्यतीति वाक्यादतो हृदयादीन्येव हवींषि पशुस्तु प्रकृतिद्रव्यम् पात्नीवतयागे
तु साक्षात्पशुरेवांगम् तस्य जीवत एव पर्यग्निकृतं पात्नीवतमुत्सृजतीत्युत्सर्गविधानात् यत्र तु विशसनं तत्र पशुः प्रकृतिद्रव्यमित्येव सिद्धं।
एवं व्रीहयोपि प्रकृतिद्रव्यतया यागांगम् तृतीयाश्रुत्येति आरुण्यस्यापि क्रयांगत्वम् तृतीयाश्रुत्या न चामूर्त्तस्य तस्य कथं क्रयांगत्वमि
ति वाच्यम्। एकहायनीरूपद्रव्यपरिच्छेदद्वारा तदुपपत्तेः व्रीहीन्प्रोक्षतीति प्रोक्षणस्य व्रीह्यंगत्वं द्वितीयाश्रुत्या न च प्रोक्षणेन व्रीहिस्व
रूपार्थं स्वरूपे आनर्थ्यं स्यात् व्रीहिस्वरूपस्य प्रोक्षणं विनानुपपत्त्यभावात् किंत्वपूर्वसाधनत्वमप्युक्तं यदि व्रीहिषु प्रोक्षणं क्रियते तदा
तैर्यागे अनुष्ठितैः पूर्वं भवति नान्यथेति अतः प्रकरण सहकृतया द्वितीयया श्रुत्या तंडुलनिर्वृत्तिप्रणाड्यापूर्वसाधनत्वं तदंगत्वं प्रोक्षण
स्योच्यत इति एवं सर्वेष्वप्यंगेषु अपूर्वप्रयुक्तत्वं वेदितव्यम्। एवमिमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्त इत्यत्रापि द्वितीया
श्रुत्या मंत्रस्याश्वाभिधान्यंगत्वं यत्तु वाक्यीयोऽयं विनियोग इति तन्न तथा सति वाक्याल्लिंगस्य बलीयस्त्वेन यावद्वाक्यादश्वाभिधान्यंगं भ
वति तावल्लिंगाद्रशनामात्रांगत्वमेव स्यात् स्योनं ते सदनं कृणोमीत्यस्येव सदनांगत्वम् श्रौतविनियोगपक्षे तु यावल्लिंगाद्रशनामात्रांगत्वं
नावच्छ्रुत्याऽऐंद्र्या गार्हपत्यमुपतिष्ठत इत्यत्र तृतीयाश्रुत्यैंद्र्या ऋचः गार्हपत्योपस्थानांगत्ववत् अश्वाभिधान्यां विनियोगः क्रियत इ
ति युक्तं मंत्रस्याश्वाभिधान्यंगत्वम् तस्माच्छ्रौत एवायं विनियोगः। यदाहवनीये जुहोतीत्याहवनीयस्य होमांगत्वं सप्तमीश्रुत्या एवमं
न्योपि विभक्तिश्रुत्या विनियोगो ज्ञेयः पशुना यजेतेत्यत्रैकत्वपुंस्त्वयोः समानाभिधानश्रुत्या कारकांगत्वं यजेतेत्याख्याताभिहितसंख्याया
भावनांगत्वं समानाभिधानश्रुतेरेकपदश्रुत्या च यागांगत्वम् न चामूर्त्तायाः तस्याः कथं यागांगत्वमिति वाच्यम् कर्तृपरिच्छेदद्वारा एतदु
पपत्तेः कर्ता चाक्षेपलभ्य आख्यातेन न हि भावनोच्यते सा च कर्त्तारं विनानुपपन्ना तमाक्षिपति ननु किमित्येवं वर्ण्यते आक्षेपलभ्यः कर्त्ते

न्या·मी ति आख्यातवाच्य एव किन्न स्यात् आख्यातश्रवणे भावनाया इव कर्त्तुरपि प्रतिपत्तेः। न च भावनयैवाक्षेपसंभवे किमिति तद्वाच्यकत्वं कल्प
७ नीयमिति सांप्रतम् तथासति आख्यातवाच्यकर्त्रैव भावनाक्षेपसंभवे तद्वाचकत्वमपि न स्यात् किंच भावनाया न केवलं कर्त्रैव संबधः
कारकांतरेणापि संबंधात् अतः सा न झटिति कर्त्तारमेवाक्षिपेत् विशेषाभावात्। कर्त्ता तु भावनयैव संबद्धो न कारकांतरेण गुणानां च परा
र्थत्वादसंबंधः समत्वात्स्यादिति न्यायात् अतः स झटिति तमाक्षिपेत् इति स एवाख्यातवाच्यो भावना तु आक्षेपलभ्यैव किन्न स्यात् किं
चैवं तृतीयादिविभक्तीनामपि करणादिवाचकत्वं न स्यात् तेषामपि कर्त्तृवदाक्षेपलाभसंभवात् किंच यदि कर्त्ता न वाच्यः स्यात्कथमेकत्व
तेनान्वियात् नहि शाब्दमशाब्देनान्वेतीति युक्तम् अन्यथा ऊहादिलोपप्रसंगः किंच देवदत्तः पचतीति सामानाधिकरण्यं न स्यात् नहि
केवलं भावनावाचकस्याख्यातस्य देवदत्तपदेन सामानाधिकरण्यमुपपद्यते एकार्थनिष्ठत्वाभावात् कर्त्तृवाचकत्वे तूपपद्यत एव
लः कर्तरीति व्याकरणस्मृतिविरोधस्त्क कर्त्तुरनभिधेयत्वे स्पष्ट एव किंच कर्त्तुरनभिधेयत्वे देवदत्तेन पचतीति प्रयोगप्रसंगः तृतीया
हि अनभिहितयोः कर्तृकरणयोर्विहिता आख्यातेन च कर्ता नाभिहित इति कर्तृवाचिनी तृतीया स्यात् देवकर्त्तुरभिधाने तु अभिहितत्वाद्दे
वन तृतीया न प्राप्नोति तस्या अनभिहिताधिकारत्वात् देवदत्तः पचतीति प्रथमा तु प्राप्नोत्येव प्रथमाया अभिहितकारकविभक्तित्वात् प्राति
पदिकार्थमात्रवाचित्वाद्वा न च तदा प्रातिपदिकेनैवार्थस्योक्तत्वात्प्रथमावैयर्थ्यम् लिंगसंख्याप्रतिपत्त्यर्थं तस्या आवश्यकत्वात् केवल
प्रातिपदिकस्य प्रयोगासाधुत्वाच्च ततश्च यदि कर्ता न वाच्यः स्याद्देवदत्तेन पचतीति प्रयोगः स्यात् तस्मादाख्यातवाच्यः कर्तेति सिद्धमि
ति पूर्वपक्षसंक्षेपः अत्राहुः स एव हि शब्दस्यार्थो यः प्रकारान्तरेण न लभ्यते अनन्यलभ्यः शब्दार्थ इति न्यायात् अतएव न गंगापदस्य ती राम
रमर्थः लक्षणयैव प्रतिपत्तिसंभवात् अतएव वचनवाक्यार्थे शक्तिः एवं चाख्यातवाच्यभावना कर्त्तारं विनाऽनुपपन्ना तमाक्षिपतीति ७

आक्षेपादेव कर्तुः प्रतिपत्तिसंभवे किमिति तद्वाचकत्वमाख्यातस्य कल्पनीयम् न च विनिगमनाविरहः कृतिमान् हि कर्त्ता एवं च कृतेरेव॰
भावनापरपर्य्यायाया आकृत्यधिकरणन्यायेनाख्यातवाच्यत्वसंभवे न तद्वतः कर्त्तुर्वाच्यत्वं कल्पनीयं गौरवप्रसंगात् न च भावनाकारकां
तरेणापि संबद्धा नदुज्झित्वा न झटिति कर्त्तारमाक्षिपतीति वाच्यम् सा हि यथा नियमेन कर्त्रा संबद्धा न तथा करणादिकारकान्तरेण तिष्ठ
तीत्यादिषु तया तदनाक्षेपात् अतः प्रथमं सा कर्त्तारमेवाक्षिपति न कारकान्तरम् अत एव चाख्याताभिहिता संख्या न कारकान्तरेण सं
बध्यते तस्य प्रथममनुपस्थितेरत एव तृतीयादिविभक्तीनां करणादिवाचित्वम् भावनायास्तैः सह नियतसंबधाभावेन तया तेषां नियमेना
नाक्षेपात् आख्यातश्रवणात्प्रागपि तृतीयादिविभक्तिश्रवणे करणादिप्रतीतेर्जायमानत्वाच्च न च शाब्दी संख्या कथमशाब्देन कर्त्रान्वे
तीति वाच्यम् कर्तुर्लक्षणांगीकारात् यथा च लक्षितं तीरं शाब्देन घोषेणान्वेति एवं लक्षितः कर्ता एकत्वेनान्वेष्यति अत एव देवदत्तः पचती
ति सामानाधिकरण्यमुपपद्यते कर्तुर्लक्षणांगीकारात्॥ न च मुख्ये संभवति किमिति लाक्षणिकत्वं स्वीकार्यमिति वाच्यम् अनन्यलभ्य॰
शब्दार्थत्वस्य व्यवस्थापितत्वात् अन्यथा सिंहो देवदत्त इति सामानाधिकरण्यं मुख्यं स्यात् किं च आख्यातवाच्यः कर्त्तेति वादिनोपि म
ते देवदत्तः पचतीति सामानाधिकरण्यं न मुख्यम् तन्मते आख्याते न तृतीयावन्निष्कृष्टशक्तिमात्ररूपकर्तृकारकाभिधानात् शक्तिमद्द्र
व्यस्याकृत्यधिकरणन्यायेनानभिधानात् देवदत्तशब्देन च द्रव्यमात्राभिधानात् अतश्च भिन्नार्थनिष्ठत्वात्तन्मतेपि न मुख्यं सामाना
धिकरण्यं किंतु लाक्षणिकमेवेति न कश्चिद्विशेषः न च लः कर्तरीति व्याकरणस्मृतिबलादाख्यातवाच्यः कर्त्तेति वाच्यम् न हि वाच्यवा
चकभावो व्याकरणस्मृत्यधीनः तस्य न्यायसहितान्वयव्यतिरेकगम्यत्वात् भवतु वा स्मृतिगम्यस्तथापि नेयं स्मृतिः कर्तुर्वाच्यत्वे प
माणं किंतु कर्तुरेकत्वे एकवचनात्मको लकारः द्वित्वे द्विवचनात्मकः बहुत्वे बहुवचनात्मक इत्यस्मिन्नर्थे प्रमाणं द्व्येकयोर्द्विवचनैकव

चनेबहुत्वबहुवचनमित्यनेनास्याः स्मृतेरेकवाक्यत्वात् यत्तूक्तं कर्तुरनभिधाने देवदत्तेन पचतीति तृतीयाप्रसंग इति तन्न तृतीया हि क
र्त्रप्रतिपत्त्यर्थं तच्च तत्संख्याप्रतिपत्त्यर्थं वा तत्र कर्त्रानुभावनाक्षेपादेव लभ्यत इति न तत्र तृतीयापेक्षा तत्संख्या तु आख्यातेनैव प्रतीयत
इति न तत्राप्यपेक्षा यथाहुः संख्या यां कारके वा धीर्विभक्त्या हि प्रवर्त्तते उभयं चात्र न तत्सिद्धं भावना तिङ्विभक्तित इति यत्र तु नाख्यातेन त
त्संख्योच्यते तत्र भवत्येव तृतीया यथा देवदत्तेन ओदनः पच्यत इति तस्मान्न कर्त्तुरनभिधाने यत्किंचिद्दूषणमित्यलमतिविस्तरेण प्र
कृतमनुसरामः तस्मिंश्च त्रिविधः श्रुतिविनियोगः सेयं श्रुतिर्लिंगादिभ्यः प्रबलं प्रमाणं लिंगादिषु हि न प्रत्यक्षो विनियोजकः शब्दोऽस्ति किं
तु कल्प्यः यावच्च तैर्विनियोजकः कल्प्यते तावत्प्रत्यक्षया श्रुत्या विनियोगस्य कृतत्वेन तेषां कल्पकत्वशक्तिर्विहन्यत इति श्रुतेः प्राब-
ल्यम् तत्र एवं ऐंद्र्या गार्हपत्यमुपतिष्ठत इत्यत्र यावल्लिंगात् ऐंद्र्या इन्द्रोपस्थानांगत्वं कल्प्यते तावत्प्रत्यक्षया श्रुत्या गार्हपत्योपस्थानार्थत्वं
क्रियत इति ऐंद्री गार्हपत्योपस्थानांगम् ॥ ः ॥ सामर्थ्यं लिंगम् यदाहुः सामर्थ्यं सर्वभावानां लिंगमित्यभिधीयत इति तेनांगत्वं यथा ब
र्हिर्देवसदनं दामीत्यस्य लवनांगत्वं स हि लवनं प्रकाशयितुं समर्थः तच्च लिंगं द्विविधम् सामान्यसंबंधबोधकप्रमाणान्तरापेक्षं तदनपेक्षं
च तत्र यदंतरेण यन्न संभवत्येव तस्य तदंगत्वम् तदनपेक्षं केवललिंगादेव यथा पदार्थज्ञानस्य कर्मानुष्ठानांगत्वम् न हि अर्थज्ञानमं-
तरेणानुष्ठानं संभवति यदंतरेण यत्संभवति न स्य तदर्थत्वं तदपेक्षं यथोक्तस्य मंत्रस्य लवनांगत्वम् लवनं हि मंत्रं विना उपायान्तरेण
स्मृत्वा कर्तुं शक्यमतो न मंत्रो लवनस्वरूपार्थः संभवति किं त्वपूर्वसाधनीभूतलवनप्रकाशनार्थः तत्त्वं च न सामर्थ्यमात्रादवगम्यते
लवनप्रकाशनमात्रे सामर्थ्यात् अतोऽवश्यं प्रकरणादि सामान्यसंबंधबोधकं स्वीकार्य्यम् दर्शपूर्णमासप्रकरणे हि मंत्रस्य पाठादे
वमवगम्यते अनेन मंत्रेण दर्शपूर्णमासापूर्वसंबंधि किंचित्प्रकाश्यत इति अन्यथा प्रकरणपाठवैयर्थ्यप्रसंगात् किं तदपूर्वसंबंधि प्रका

ष्यमित्यपेक्षायां सामर्थ्याद्बर्हिर्लवनमित्यवगम्यते तन्न हि बर्हिः संस्कारद्वारा पूर्वसंबंधीति मंत्रस्य सामर्थ्यात्तदर्थत्वे सति नानर्थक्यं प्रसज्य
ते तस्माद्बर्हिर्देवसदनं दामीत्यस्य प्रकरणाद्दर्शपूर्णमाससंबंधितयावगतस्य सामर्थ्याल्लवनांगत्वमिति सिद्धम् पूषानुमंत्रणमंत्राणां
तु यागानुमंत्रणसमाख्यया यागसामान्यसंबंधेवगते सामर्थ्यात्पूषयागसंबंधोवगम्यते। ननु तेषां यावत्समाख्यया पूषयागे न सामा
न्यसंबन्धोवगम्यते तावत्प्रकरणाद्दर्शपूर्णमासाभ्यामेव सामान्यसंबंधोऽवगतः समाख्यातस्तस्य बलीयस्त्वात्। अत एव पौरोडाशिक
मिति समाख्याते ब्राह्मणे आम्नातानामपि प्रयाजानां प्रकरणात्सान्नाय्योपांशुयागांगत्वमपीत्युक्तम्। किंच यागानुमंत्रणसमाख्यया
पि न पूषयागे न सामान्यसंबंधोवगम्यते किंतु यागमात्रेण प्रकरणेन तु दर्शपूर्णमासाभ्यामेव विशेषेण संबंधोवगम्यते अतः प्रकरणात्
झटिति तत्संबंधस्यैवावगतत्वात्तदर्थत्वमेव तेषां युक्तम् पूषेति शब्दस्य पुषतीति व्युत्पत्त्या कथंचिदग्न्याद्यभिधायित्वान्नैवम्। पूषानुमंत्र
णमंत्रे हि श्रूयमाणे एवमवगम्यते पूषाभिधानसमर्थत्वादयं मंत्रस्तत्प्रकाशनार्थ इति लवनमंत्र इव लवनप्रकाशनार्थः। न तत्र प्रकरणा
द्यपेक्षा येन तेषामुपजीव्यत्वेन प्राबल्यं स्यात् प्रकरणात्तु दर्शपूर्णमासार्थत्वे तस्य वाक्यलिंगश्रुतिकल्पनेन विनियोजकत्वात् लिंगः
स्योपजीव्यत्वेन प्राबल्यं अतो लिंगात्पूषप्रकाशनार्थत्वेऽवगते तन्मात्रप्रकाशनमनर्थकमित्यपूर्वप्रकाशनार्थत्वं वक्तव्यं किं तदपूर्वमि
त्यपेक्षायां यागानुमंत्रणसमाख्यानुगृहीताल्लिंगात्पूषयागापूर्वसंबंधिदेवताप्रकाशनार्थोयमित्यवगम्यते अतो यद्यपि समाख्याऽ
तः प्रकरणं बलीयस्तथापि तस्य लिंगेन बाधितत्वात् समाख्याया दुर्बलाया अपि लिंगाश्रितत्वेन प्राबल्यात्सैव सामान्यसंबंधे प्रमाणं दुर्ब
लस्य प्रबलाश्रितस्य प्राबल्यात् अत एव श्रुत्यपेक्षया दुर्बलाया अपि स्मृतेराचमनरूपप्रबलपदार्थाश्रितत्वेन प्राबल्यात्सदार्थधर्मगुण
भूतश्रौतक्रमत्यागेन वेदकरणानन्तरं क्षुते आचमनमेव कार्यमित्युक्तं यथाहुः अत्यंतबलवंतोपि पौरजानपदा जनाः दुर्बलैरपि बाध्यंते पु

न्या॰मी॰ ९

रुषैः पार्थिवाग्निनैरितिपत्नुपूषेतिशब्दः कथंचिदग्न्याद्यभिधायीति तन्न तस्यादंतको हि सइत्यादिवाक्यशेषेण वैदिकप्रसिध्याच अर्थवि
शेषेरूढत्वात् रूढेश्चावयवार्थालोचनसव्यपेक्षाद्योगाद्बलीयस्त्वात् अतएव वर्षास्वरथकारोऽग्नीनादधीतेत्यत्र रथकारशब्देन सौधन्व
नापरपर्यायो वर्णविशेष उच्यते रूढिः प्राबल्यान्न तु रथंकरोतीति व्युत्पत्त्या द्विजातयः योगस्य दौर्बल्यादित्युक्तम् षष्ठे तस्माद्युक्तं स
माख्यया सामान्यसंबन्धेऽवगमे सामर्थ्यात्पूषयागसंबंधः पूषानुमंत्रणमंत्राणामिति यथाहुः यागानुमंत्रणानीति समाख्याक्रतुयाजि॰
कात्तस्मात् शक्त्यनुरोधेन प्राप्तिस्तदेवतेक्रनाविति न तत्सिद्धप्रमाणं तत्र सिद्धसामान्यसंबन्धस्य पदार्थविनियोजकं लिंगमिति तत्र मंत्रविनि
योजकं लिंगं मुख्ये एवार्थे न गौणे मुख्यार्थस्य प्रथममुपस्थितत्वेन तत्रैव विनियोगबुद्धौ पर्यवसन्नायां पुनर्गौणेऽर्थे विनियोगकल्पना
यां गौरवप्रसंगात् अतएव बर्हिर्देवसदनं दामीति मंत्रः सामर्थ्यात्कुशलवनांगं तेषां मुख्यत्वात् न उलपराजिलवनांगमित्युक्तम् त
दिदं लिंगं वाक्यादिभ्यो बलवत् तेषां हि न साक्षाद्विनियोजकत्वं किंतु श्रुतिं कल्पयित्वा न चासमर्थस्य श्रुतिं कल्पयित्वा विनियोग
कल्पना संभवतीति सामर्थ्यस्यापि कल्प्यत्वे नोपजीव्यत्वात् अतस्तैर्यावत्सामर्थ्यं कल्पयित्वा श्रुतिः कल्प्यते तावदेव क्लृप्तेन सामर्थ्ये
न श्रुतिं कल्पयित्वा विनियोगः क्रियत इति तस्य प्राबल्यम् अतएव स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामीत्यस्य
सदनांगत्वं लिंगात् न तु वाक्यात्सदनांगत्वं तस्य दौर्बल्यादिति समभिव्याहारो वाक्यम् समभिव्याहारो नाम साध्यसाधनत्वादिवाचकद्वितीयाद्य
भावेऽवस्कतः शेषशेषिणोः सहोच्चारणं यथा यस्य पर्णमयी जुहूर्भवतीति अत्र हि न द्वितीयादिविभक्तिः श्रूयते केवलं पर्णताजुह्वोः समभिव्याहारमात्रम् त
स्मादेव च पर्णताया जुह्वंगत्वं न चानर्थक्यं जुहूशब्देनापूर्वलक्षणात् तदयं वाक्यार्थः पर्णतया अवत्तहविर्धारणद्वारापदपूर्वसाध राम
नं तद्भावयेदिति एवं च पर्णतया यदि जुहुः क्रियते तदेव तत्साध्यमपूर्वं भवति नान्यथेति गम्यते इति न पर्णतायाः वैयर्थ्यम् अवत्तहविर्धार॰ ९

पाह्वारेतिचावश्यंवक्तव्यम् अन्यथास्त्रुवादिष्वपिपर्णतापत्तेः साचेयंपर्णतानारभ्याधीतानसर्वत्रक्रतुषुगच्छतिविकृतिषुचोदकेनापि प्राप्तिसंभवेनद्विरुक्तत्वापत्तेः किंतुप्रकृतिषुतदुक्तं प्रकृतौवाद्विरुक्तत्वादिति अत्रविकृतिर्यतोंगानिगृह्णातिसाप्रकृतिरितिनप्रकृतिश॰ ब्देनविवक्षितंगृहमेधीयपर्णतायाअप्राप्तिप्रसंगात् नहिगृहमेधीयात्काचनविकृतिरंगानिगृह्णातिमानाभावात् किंतुचोदकाद्यत्रांगाप्राप्तिस्तत्कर्मप्रकृतिशब्देनविवक्षितम् यथादर्शपूर्णमासौतत्रहीनचोदकादंगप्राप्तिःप्रकरणपठितैरेवांगैर्नैराकांक्षात् गृहमेधीयादिष्वपिनचोदकादंगप्राप्तिःक्लृप्तोपकारैरेवआज्यभागादिभिर्नैराकांक्षात् अतोयत्रचोदकाप्रवृत्तिस्तत्रानारभ्याधीतानांसन्निवेशः साप्तदश्यंत्वनारभ्याधीतमपिनप्रकृतौगच्छतिप्रकृतेःपांचदश्यावरोधात् किंतुविकृतिषुगच्छतितत्रापिनसर्वासुगच्छतिचोदकप्राप्तपांचदश्यबाधप्रसंगात्।किन्तुप्रत्यक्षश्रुतसाप्तदश्यासुमित्रविंदादिषुगच्छति यथाहुः एवंचप्रकृतावेतत्पांचदश्यंप्रतिष्ठितम् विकृतौचनयत्रास्तिसाप्तदश्यपुनःश्रुतिरितिनचवाक्यवैयर्थ्यम् अनारभ्याधीतस्यैवसाप्तदश्यमित्रविंदादिप्रकरणस्थेनवाक्येनोपसंहारात् उपसंहारोनामप्राप्तस्यविशेषेनियमनम् यथाहुः सामान्यविधिरस्पष्टःसंह्रियेतविशेषतइति तत्रानारभ्यविधिःसामान्यविधिःमित्रविन्दादिप्रकरणस्थस्तुविशेषविधिरित्यास्तांतावत् प्रकृतमनुसरामः तस्मिन्हूंवाक्यादंगत्वंतदिदंवाक्यंप्रकरणाद्बलीयः प्रकरणंहिनसाक्षाद्विनियोजकंतद्ध्याकांक्षारूपम् नचाकांक्षास्वयंप्रमाणंकिन्तुसाकांक्षंवाक्यंदृष्ट्वा भवत्येतादृशीमतिः नूनमिदंवाक्यंकेनचिद्वाक्येनैकवाक्यभूतमितिनतच्चाकांक्षारूपंप्रकरणंवाक्यस्यवाक्यांतरेणैकवाक्यत्वेप्रमाणं एवंचयावत्प्रकरणंवाक्यंकल्पयित्वाविनियोजकंभवतितावद्वाक्यंलिंगश्रुतीकल्पयित्वाविनियोजकंभवतीतिप्रकरणाद्वाक्यंबलीयः अतएवैंद्राग्नीइदंहविरजुषनामवीवृधेतांमहोज्यायोक्रातामित्यत्रैंद्राग्नीपदस्यलिंगाद्दर्शांगत्वेसिद्धे इदंहविरित्यादेरपितदेकवाक्यत्वाद्दर्शांगत्वम् ननुप्रकरणाद्दर्शपूर्णमा

न्या॰मी सांगत्वम् प्रकरणाद्वाक्यस्य बलीयस्त्वादिति ॥ ❁ ॥ उभयाकांक्षाप्रकरणम्। यथा प्रयाजादिषु समिधो यजतीत्यत्र हि इष्टविशेषस्यानिर्दे
१० शात्तस्मिन्यागेन भावयेत् किमित्यस्त्युपकार्याकांक्षा दर्शपूर्णमासवाक्येपि दर्शपूर्णमासाभ्यां स्वर्गं भावयेत्कथमित्युपकारकाकांक्षा तदु
भयाकांक्षया प्रयाजादीनां दर्शपूर्णमासांगत्वं सिद्ध्यति। ननु यदि प्रयाजादिवाक्ये इष्टविशेषो न श्रूयते तर्हि विश्वजिन्न्यायेन स्वर्गं फलं क
ल्प्यतां विश्वजिदधिकरणे हि विश्वजिता यजेतेत्यत्र फलस्याश्रवणात् फलमंतरेण विधिश्रुतेरनुपपत्तेरवश्यं फले कल्पयितव्ये स
र्वाभिलषितत्वेन स्वर्गः फलमित्युक्तम् तदुक्तम् सः स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वादिति रात्रिसत्रन्यायेन वार्थवादिकं फलं कल्प्य
तां रात्रिसत्राधिकरणे हि प्रतितिष्ठंति ह वै य एता रात्रीरुपयंतीत्यत्र विध्युद्देशे फलाश्रवणात्फलमंतरेण विधिश्रुतेरनुपपत्तेरवश्यं फले
कल्पयितव्ये आर्थवादिकं प्रतिष्ठाख्यं फलमित्युक्तम् विश्वजिन्न्यायेनानुपस्थितस्वर्गकल्पने तस्य प्रकृतसंबंधकल्पने गौरवादर्थ
वादोपस्थितस्यैव प्रकृतफलत्वं कल्पने लाघवात् ॥ ॥ तदुक्तम्। फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यादिति तस्माद्विश्वजिन्न्यायेन
रात्रिसत्रन्यायेन वा स्वतंत्रफलार्थत्वे संभवति किमिति दर्शपूर्णमासांगत्वं स्वीक्रियते इति मैवम् स्वतंत्रफलार्थत्वेऽन्यतराकांक्षया सं
बंधः स्यात् न त्वत्र फलस्य साधनाकांक्षास्ति श्रूयमाणं हि फलं साधनमाकांक्षति न चात्र तच्छ्रूयते एवं च फलस्याकांक्षाभावात् केवलं
किं भावयेदिति प्रयाजानां भाव्याकांक्षैवेति स्वतंत्रफलार्थत्वं स्यात् दर्शपूर्णमासार्थत्वे तूभयाकांक्षा प्रमाणम् प्रयाजानां भाव्याकां
क्षाया इतरत्र च कथंभावाकांक्षायाः सत्वात् अन्यतराकांक्षातश्चोभयाकांक्षा बलीयसीति वक्ष्यते ततश्च दर्शपूर्णमासार्थत्वमेव
युक्तं न स्वतंत्रफलार्थत्वमिति तदुक्तम् द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यादिति अत्र द्रव्ये फलश्रुतिर्यस्य पर्णम राम
यी जुहूर्भवति न स पापं श्लोकं शृणोतीति एवमाद्या संस्कारे फलश्रुतिर्यदंक्ते चक्षुरेव भ्रातृव्यस्य वृंक्ते इत्येवमाद्या कर्मणि फलश्रुति १०

र्वमेवास्तद्यत्तस्यक्रियतेयस्त्वयाजानुयाजाइज्यन्ते इत्याद्याकर्मपदंचारादुपकारककर्मपरंद्रष्टव्यम् संस्कारकर्मणः पृथक्संकीर्तनादि-
त्यास्तांतावत् तदिदंत्रकरणम् क्रियायाएवविनियोजकम् नद्रव्यगुणयोः तयोस्तुक्रियायोगाद्धिनियोजकम् कुतइतिचेत् शृणुयजेतस्व
र्गकामइत्यत्राख्यातांशेनार्थीभावनाभिधीयतेभावयेदिति साचांशत्रयमपेक्षते किंभावयेत्केनभावयेत्कथंभावयेदितितत्रभाव्याकांक्षायां
षष्ठ्याद्यन्यायेनस्वर्गोभाव्यतयान्वेतिस्वर्गंभावयेदितिकरणाकांक्षायांसमानपदोपात्तोया — गोभावार्थाधिकरणन्यायेनकरणतयान्वेतिया
गेनस्वर्गंभावयेदिति ततः कथमितिकथंभावाकांक्षाजायतेतस्यांचाकांक्षायांयत्सन्निधौपठितमश्रूयमाणफलकंचक्रियाजातंतदेवोप
कार्य्याकांक्षयेतिकर्त्तव्यतात्वेनान्वयमनुभवितुंयोग्यंक्रियायाएवलोकेकथंभावाकांक्षायामन्वयदर्शनात् नहिकुठारेणछिंद्यात्कथमि
त्याकांक्षायांहस्तइतिकेवलमुच्चार्यमाणेपिहस्तोऽन्वयंप्राप्नोति किंतर्हि हस्तेनोद्यम्यनिपात्येदिति उच्चार्यमाणेउद्यमननियतनेएव
हस्तोपितद्वारेणैवान्वयंप्राप्नोतीतिसर्वजनीनमेतत् किंचकथंभावाकांक्षानामकरणगतप्रकाराकांक्षाथमोः प्रकारवाचित्वात् सामान्य
स्यभेदकोविशेषः प्रकारः सामान्यंचक्रियारूपमेवाख्यातेनोच्यतेयजेत्स्वर्गकामइत्यस्यह्ययमर्थः यागेनतथाकर्त्तव्यंयथास्वर्गोभ
वतीतिक्रियासामान्यस्यचविशेषः क्रियैवभवतिनहिब्राह्मणविशेषः परिव्राजकादिरब्राह्मणोभवतिएवंचकरणगतक्रियाविशेष
कांक्षाऽपरनामधेयकथंभावाकांक्षायां क्रियैवान्वेतीतियुक्तःसचकरणगतःक्रियाविशेषोन्वाधानादिब्राह्मणतर्पणान्तःक्रियारू
पएवेतियुक्तं तस्यप्रकरणेनग्रहणंतस्यचकरणगतत्वंतदुपकारकत्वमेवतेनविनायागेनापूर्वाजननात् नह्युद्यमननिपतन
व्यतिरेकेणकुठारेणद्वैधीभावोजन्यतेतत्सिद्धंकथंभावाकांक्षायांक्रियैवान्वेतीति अतएवद्रव्यदेवतयोर्यागसंपादनद्वारान्वयः ९
सांप्रदायिकैरुक्तः विकृतौचकथंभावाकांक्षायामुपकारकसंपादनमतिदिश्यते इत्युक्तम् यदिचकथंभावाकांक्षायांसिद्धं व

स्त्वन्वयोग्यंस्यात् तदीयकार्य्यसंपादनपर्यन्तंधावनंग्रंथकृतामनर्थकंस्यात् अतश्चक्रियायाएवइतिकर्त्तव्यतात्वंकथंभावाकांक्षागृही
तस्येतिकर्त्तव्यतात्वात् इतिशब्दस्यप्रकारवाचित्वात् कर्तव्यस्येतिप्रकारइतिकर्त्तव्यताप्रकारश्चसामान्यभेदकोविशेषइत्युक्तम् कर्त्त
व्यस्यचविशेषः कर्त्तव्यएवभवतीतिनसिद्धस्यवस्तुनइतिकर्त्तव्यतात्वंकिंतुक्रियायाएवसिद्धस्यतुद्रव्यादेः केवलमंगत्वंनदपिश्रुत्या
दिनानतुप्रकरणात् यथाहुः नावांतरक्रियायोगादृतेवाक्योपकल्पितात् गुणद्रव्यकथंभावेर्गहेतिप्रकृताःक्रियाइति अतएवबर्हिर्देवसदनं
दामीत्यादिमंत्रस्यलिंगादंगत्वं नतुप्रकरणादित्युक्तम् अर्थवादाधिकरणपूर्वपक्षसमाधानेणकेनचिद्द्रव्यस्येतिकर्त्तव्यतात्वाभिधान
मंगत्वाभिप्रायंद्रष्टव्यंबहुग्रंथस्वरसादुक्तयुक्तेश्चेति तत्सिद्धंप्रकरणंक्रियायाविनियोजकमिति तच्चप्रकरणंद्विविधंमहाप्रकरणमवा
न्तरप्रकरणंचेति तत्रभावनायाःप्रकरणंमहाप्रकरणंतच्चप्रयाजादीनांग्राहकं तच्चप्रकृतावेवयत्रसमग्रांगोपदेशःसाप्रकृतिः यथादर्
शपूर्णमासादि तत्रचोभयाकांक्षारूपंप्रकरणंसंभवतिआकांक्षानुपरमात् विकृतौतुनप्रकरणंसंभवति। यत्रतुनसमग्रांगोपदेशः सावि
कृतिः यथासौर्यादिः तत्रचयान्यपूर्वाण्यंगानिविद्यंते उपहोमादीनि तेषांनप्रकरणंविनियोजकं तत्रयद्यपितेषांकिंभावयेदित्यस्त्येवा
कांक्षातथापिप्रधानस्यनकथंभावाकांक्षास्तिप्राकृतैरेवांगैर्निराकांक्षत्वात् नचप्राकृतानामंगानामत्रापठितत्वेनाप्रत्यक्षत्वाद्वैकृतानां
पठितत्वेनप्रत्यक्षत्वात्तैरेवाकांक्षोपशमइतिवाच्यम् तेषांपठितत्वेपिअक्लृप्तोपकारत्वेनझटित्याकांक्षोपशमनेःसामर्थ्यात् प्राकृतानां
क्लृप्तोपकारत्वेनतच्छमनेसामर्थ्यात् नचात्रतेषामुपस्थापकाभावः उपमितिलक्षणप्रमाणेनतेषामुपस्थितत्वात् सौर्यवाक्येहिदृष्टेऔ
षधिद्रव्यत्वेनएकदेवत्यत्वेनसादृश्येनआग्नेयवाक्यमुपमीयतेगवयदर्शनात् गोःउपमानवत् तस्मिंश्चोपमितेतेनतदर्थोज्ञायतेसाच
त्र्यंशाभावनातत्रसौर्यवाक्येभावनायाः भाव्यकरणयोःसत्वादितिकर्त्तव्यताकांक्षायामुपकारदृष्टभावेनाग्नेयेतिकर्त्तव्यतातिदिश्यते।

सौर्य्यीयागेन ब्रह्मवर्चसं भावयेदाग्नेयवदिति तथा च तत्रैवाकांक्षोपशमान्न विकृतेः प्रकरणमस्ति अन्यनराकांक्षारूपस्थानादेव चापूर्वांग
ग्रहणं न च प्राकृतांगग्रहणमेव विकृतौ प्रकरणात् किं न स्यादिति वाच्यं तेषामपि प्रकृत्युपकारकतयाकांक्षोपशमात् ननु प्राकृतांगानामाकां
क्षाभावे तेषां विकृतौ संबंधः केवलं स्थानात् अपूर्वाणां त्वाकांक्षासत्त्वाद्विकृतेरप्याकांक्षावत्त्वात्तेषां न तत्संबंधः प्रकरणात् प्रकरणं च स्थाना
त् झटिति विनियोजकमित्यपूर्वाणामेव प्रथमं संबंधः स्यात् न प्राकृतानामिति उच्यते सत्यं प्रकरणं झटिति विनियोजकं तथापि प्रमाणबला
बलात्प्रमेयबलाबलस्य ज्यायस्त्वात् उक्तविधयोपस्थितत्वात् प्राकृतानामेव संबंधो युक्तः क्लृप्तोपकारत्वात् न वैकृतानां कल्प्योपकारत्वा
त् विकृतेश्चोपकारकपदार्थाकांक्षा न पदार्थमात्राणामिति युक्तः प्रथमं प्राकृतांगसंबंधः ततश्च न विकृतौ प्रकरणं विनियोजकं यत्तु विकृ
तौ प्राकृतांगानुवादेन विधीयते यथौदुंबरो यूपो भवतीति यूपानुवादेन औदुंबरत्वं तत्प्रकरणात् गृह्यते ननु न तत्प्रकरणाद्गृह्यते अक्रि
यात्वात् क्रियाया एव प्रकरणग्राह्यत्वादिति चेत्सत्यं तथापि तु तावद्विधीयमानस्यौदुंबरत्वस्यास्त्येवाकांक्षा किं भावयेदिति न च यूपानु
वादेन तस्य विधीयमानत्वात् यूपस्य चादृष्टरूपत्वात्तेनैवौदुंबरत्वस्य नैराकांक्ष्यम् आहवनीयेनेवाधानस्येति वाच्यम् यूपस्य केवला
दृष्टरूपत्वाभावात् तस्य हि तद्रूपत्वे खादिरत्वादिकं केवलादृष्टार्थं स्यात् न च तत्संभवति तथा सति खादिरत्वाभावे प्रतिनिधित्वेन कद
रोपादानं न स्यात् अदृष्टार्थस्य प्रतिनिध्यभावात् न हि खदिरजन्यमदृष्टं कदरेण क्रियत इत्यत्र प्रमाणमस्ति अत एव नादृष्टार्थानां प्रतिनि
धिः तदुक्तम् न देवताग्निशब्दक्रियमन्यार्थत्वादिति अन्यार्थत्वादिति अदृष्टार्थत्वात् प्रतिनिधित्वेन चोपादानं कदरादेरुक्तं ग्रंथेषु तस्मा
न्न यूपस्य केवलादृष्टरूपत्वं अपि तु दृष्टादृष्टसंस्कारगणो यूप इति सांप्रदायिकाः एवं चौदुंबरत्वं न यूपमात्रेण नैराकांक्ष्यं दृष्टसंस्कारस्य प्र
कारांतरेणापि संभवात् अतश्चास्ति औदुंबरत्वस्याकांक्षा विकृतेरप्यस्ति कथंभावाकांक्षा सा च तदा शाम्यति यदोपकारास्तत्स्पृष्टभावे न

चपदार्था अन्वीयंतेनतूपकारमात्रान्वयेनशाम्यति अतश्चयथेंद्रियभावनायाः करणाकांक्षादध्नः करणत्वेनान्वयेजातेसिद्धस्यकरणत्वानु
पपत्त्या होमस्याश्रयत्वान्वयंयावदनुवर्त्ततेनतुदध्यन्वयमात्रेणनिवर्त्तते आश्रयत्वेनचगृह्यमाणोहोमः करणाकांक्षैवगृह्यतइत्युच्य
तेनत्वाश्रयाकांक्षानामचतुर्थ्यस्तिएवंविकृतेः कथंभावाकांक्षानोपकारान्वयमात्रेणनिवर्त्तते उपकारपृष्ठभावेनयावत्पदार्थान्वय
मनुवर्त्तते अतश्चोपकारपृष्ठभावेनगृह्यमाणाः पदार्थाः कथंभावाकांक्षयैवगृह्यंतेतत्रप्राकृताः पदार्थाः कथंभावाकांक्षयागृह्यमाणाः
अपिनप्रकरणग्राह्याः प्रकृत्युपकारकतयातेषामाकांक्षाभावात् औदुंबरत्वादयस्त्वन्यानुपकारकतयासाकांक्षाः पशुनियोजनयूप
पृष्ठभावेनयावत्खादिरत्वमायातितावद्विधीयंतेइतियुक्तंतेषांप्रकरणग्रहणमुभयाकांक्षासत्वात् यदिहियूपपृष्ठभावेनखादिर
त्वंविहितंस्यात् ततोविकृतेराकांक्षाभावात् औदुंबरत्वंनप्रकरणग्राह्यंस्यात् नचैतदस्तिचोदकस्यखादिरत्वाविषयत्वात् ननुयदिया
वत्खादिरत्वमायातितावदेवौदुंबरत्वंविधीयते तदातेनखादिरत्वबाधोऽप्राप्तबाधः तार्तीयबाधवत् तथाहिबाधोद्विविधः अप्राप्तबा
धः प्राप्तबाधश्चेति तत्रतार्तीयबाधोऽप्राप्तबाधः तत्रहियावद्दुर्बलेनप्रमाणेनविनियोगः कर्तुमारभ्यतेतावदेवप्रबलप्रमाणेनविनियो
गः क्रियतेइति तद्बोधितेनेतरबाधोऽप्राप्तबाधः दुर्बलप्रमाणस्याप्रवृत्तत्वात् प्राकृतस्यत्वगस्यविकृतौचोदकप्राप्तस्यप्रत्याम्नानाद
र्थलोपात्प्रतिषेधाद्वायोबाधः सप्राप्तबाधः यथाप्राकृतानांकुशानांप्रतिकूलशराम्नानात् यथावाऽवघातस्यकृष्णलेषुवैतुष्य
रूपप्रयोजनलोपात् यथावापित्र्येष्टौहोतृवरणस्यनहोतारंवृणीतइतिप्रतिषेधात् औदुंबरत्वेनचखादिरत्वबाधः प्राप्तबाध
एववक्तव्यः शरकुशन्यायेनचोदकस्यचखादिरत्वाविषयत्वेप्राप्त्यभावात् तदनुपपत्तिः स्यादितिउच्यते तार्तीयप्रमाणविनियुक्तेने
तरस्यबाधनंत्तावदप्राप्तबाधनंप्रकरणंचतार्तीयंतेनतद्धिनियुक्तौदुंबरत्वेनेतरस्यबाधनमप्राप्तबाधएवनहिवैकृतेनप्राकृतबाधः

प्राप्तबाध एवेति कुलधर्मः वस्तुतस्तु प्राप्तबाध एवायम् नच खादिरत्वस्य चोदकाविषयत्वेन प्राप्त्यभावात् कथं तद्बाधः ------
प्राप्तबाधः तद्विषयत्वेवा तेनैव निराकांक्षत्वान्नौदुंबरत्वस्य प्रकरणं विनियोजकं स्यादिति वाच्यम् न हि प्राप्तबाधस्थले चोदकेन पदार्थाः
प्राप्यन्ते तथा सति शास्त्रप्राप्तत्वेन बाधो न स्यात् किं तर्हि तानेव पदार्थान्वस्तुतः प्रापयति ये विकृतौ न बाध्यंते ते च पदार्थाः प्रकृतिवच्छब्देन प्राप्यं
ते इति भवति पुरुषस्य भ्रांतिः यथा प्रकृतौ कृतं तथा विकृतौ कर्त्तव्यमिति सर्वे पदार्थाः प्राकृताः कर्त्तव्या इति अतश्च भ्रांतिप्राप्ताः खादिर
त्वादयः शास्त्रप्रतिपन्नैरौदुंबरत्वादिभिर्बाध्यंते इति तद्बाधः प्राप्तबाधः नच भ्रांतिप्रतिपन्नेन वैधी आकांक्षा निवर्त्तयितुं शक्यते तस्मा
द्युक्तमुक्तमुभयाकांक्षारूपप्रकरणसंभवाद्विकृतौ प्राकृतांगानुवादेन विधीयमानानामौदुंबरत्वादीनां प्रकरणं विनियोजकमिति एवं पृषदा
ज्येनानुयाजान्यजतीति प्राकृतानुयाजानुवादेन विधीयमानं पृषदाज्यमपि प्रकरणाद्विकृत्यंगमिति केचिदाचार्याः अन्ये त्वेवमाहुः पृषदाज्यं
हि अनुयाजानुवादेन विधीयते तत्स्वरूपे चानर्थक्यप्राप्तेः तैर्न विकृत्यपूर्वं लक्षयितुं युक्तं विप्रकर्षात् किंतु दीक्षणीया वाङ्नियमन्या
येन स्वापूर्वमेव लक्षयितुं युक्तं सन्निकर्षात् अतस्वोत्सवनादीनां प्रोक्षणाद्यपूर्वप्रयुक्तत्वमुक्तम् अतश्च विधीयमानस्य पृषदाज्यस्य वा
क्यप्रतिपन्नेनानुयाजापूर्वेणैव नैराकांक्ष्यात् न प्रकरणाद्विकृत्यपूर्वार्थत्वमिति वयं त्वंगीकृत्यापि विकृत्यर्थत्वं ब्रूमः भवतु वा विकृत्यर्थत्वं पृष
दाज्यस्य न तथापि न प्रकरणं वियोजकं भवति यूपपृष्ठभावेन हि यावत्खादिरत्वमायाति तावदौदुंबरत्वविधानादुभयाकांक्षासंभवाद्युक्तः
प्रकरणविनियोगः एवं यावदनुयाजपृष्ठभावेन आज्यमायाति तावदेव यदि पृषदाज्यं विधीयेत तदोभयाकांक्षासंभवात्प्रकरणविनि
योगो भवेत् न त्वेतदस्ति न हि पृषदाज्यं नाम द्रव्यान्तरं किंचिदस्ति यदाज्यस्थानापन्नं विधीयेत औदुंबरत्वमिव खादिरत्वस्थानापन्नं
पृषच्छब्दस्य पृषन्मणिरित्यादौ चित्रवाचित्वेन दृष्टत्वात् पृषदाज्यशब्दस्य चित्राज्यवाचित्वात् अत एव निगदेषु आज्यपानि॰

न्या·मी त्येववक्तव्यं नतु पृषदाज्यपानित्युक्तम् नचयावत्प्राकृतमाज्यमायातितावदेवचित्राज्यविधानात्प्रकरणविनियोगः संभवइतिवा
१३ च्यम्। नहिपृषदाज्यशब्देनचित्रतागुणविशिष्टमाज्यंविधीयेतविशिष्टविधानेगौरवापत्तेः किंतुप्राकृताज्यानुवादेनचित्रतागुणमा
त्रं विधीयते लोहितोष्णीषाऋत्विजः प्रचरंतीतिवत् तदुक्तं दशमेचतुर्थचरणांते नवागुणशास्त्रत्वादिति प्राकृतस्येवाज्यस्य चित्रगु
णमात्रविधानमिति चशास्त्रदीपिकायांच विकृतेः प्राकृतेनाज्येनक्लृप्तोपकारैश्चानुयाजैर्नैराकांक्ष्यपश्चाद्विधीयमानस्यचित्रतागुणस्यो
पहोमाद्यपूर्वांगवत् नप्रकरणंविनियोजकंसंभवति यदिहिप्राकृतस्यकस्यचिद्गुणस्यस्थानेचित्रतागुणोविधीयतेतदासगुणोयावदा
यातितावद्विकृतेनैराकांक्ष्याभावात् चित्रतागुणस्यचतावदेवविधानादुभयाकांक्षासंभवात् प्रकरणविनियोगोभवेत् नचतादृशः प्राकृ
तोगुणोस्ति आज्यस्यानुयाजानांचित्रतागुणात्प्रागेवविधानात् तस्यतत्स्थानापन्नत्वाभावात् नचाज्यपृष्टभावेनयावत्प्राकृतोनिर्गुण
त्वमापातितावदेवास्यविधानात्प्रकरणसंभवइतिवाच्यम् निर्गुणस्याविहितत्वेनपाणिकंडूयनवदनंगत्वात् विकृतेस्तदाकांक्षाभा
वात् तथाहिज्योतिष्टोमेदक्षिणादानसमयेविहितकृष्णविषाणत्यागस्यद्विरात्रादिषुचोदकप्राप्तस्यप्रथमेह्नि अननुष्ठानंउत्तरेह्निदक्षि
णादानपूर्वकालीनैः पदार्थैः कृष्णविषाणकंडूयनस्यशास्त्रविहितत्वेनापेक्षितत्वात् ज्योतिष्टोमेचदक्षिणादानोत्तरकालंपाणिकंडूयनं
दृष्टमपिद्विरात्रादिषुप्रथमेह्नि अनुष्ठीयमानैर्दक्षिणादानोत्तरकालैः पदार्थैर्नापेक्ष्यतेतस्यप्रकृतावर्थसिद्धत्वेनाशास्त्रीयत्वादित्येवं
निर्गुणत्वस्याविहितत्वेनप्रकृतेस्तदपेक्षानास्तीति तस्मादुभयाकांक्षायाअसंभवात् पृषदाज्यस्यनप्रकरणविनियोगः संभवतीत्य
लमतिविस्तरेणतत्सिद्धं महाप्रकरणंप्रकृतावेवविनियोजकं विकृतौतुयत्प्राकृतदृष्टार्थांगानुवादेनविधीयतेतस्यविनियोजकंनतुके राम
वलंविधीयमानस्यापूर्वांगस्येति यत्तुविकृतावपिप्राकृतधर्मानुवादेनविधीयमानयोर्धर्मयोरंतरालेः पूर्वमप्यंगकेवलंवक्ष्यतेतद १३

पिप्रकरणेनविनियुज्यते यद्यपिविकृतेः कथंभावाकांक्षा प्राकृतैरेवांगैः शाम्यति तथापि यत्र प्राकृतांगानुवादेन धर्मविधानं तत्र तद्विधानं
यावत् भवति तावत्कथंभावाकांक्षा न निवर्त्तते अतो विकृतेराकांक्षावत्वादंतराले विहितस्यापूर्वांगस्य भाव्याकांक्षासत्वात् युक्तं त-
स्य प्रकरणाद्विकृत्यर्थत्वं यथा मनहोमेषु तेहि प्राकृतांगानुवादेन विधीयमानयोर्धर्मयोरंतराले विधीयंते इत्युक्तम् तत्र रत्नादावि-
त्यास्तां तावत् फलभावनाया अंतराले यदंगभावनायाः प्रकरणं तदवांतरप्रकरणं तच्चाभिक्रमणादीनां प्रयाजादिषु विनियोजकं तच्च संदं
शेन ज्ञायते न तद्भावे ऽविशेषात् सर्वेषां फलभावनाकथंभावेन ग्रहणात् संदंशो नाम एकांगानुवादेन विधीयमानयोरंतराले विहितत्व
म् यथाभिक्रमणं तद्धि समानयते जुह्वामुपभृत इत्यादिना प्रयाजानुवादेन किंचिदंगं विधाय विधीयते पश्चादपि प्रयाजानुवादेन सौ
वै प्रयाजानां मिथुनं वेदेत्यादिना किंचिदंगं विधीयते अतः प्रयाजांगमध्ये पठितमभिक्रमणं तदंगं भवति तत्कथंभावाकांक्षाया अशान्तेः
यथाहुः परप्रकरणस्थानामंगैरकृत्यादिभिस्त्रिभिः ज्ञाते पुनश्च तैरेव संदंशेन तद्दिश्यते इति नचांगभावनायाः कथंभावाकांक्षाभावात्
कथंप्रयाजभावना — कथंभावेनाभिक्रमणं गृह्यते इति वाच्यं भावनासामान्ये न सर्वत्र कथंभावाकांक्षायाः सत्वात्प्रयाजैरपूर्वं कृत्वाथां
गोपकारं भावयेदित्युक्ते यो नाम न जानाति प्रयाजैरपूर्वं कर्त्तुं तस्यास्त्येव कथंभावाकांक्षा कथमेभिरपूर्वं कर्त्तव्यमिति सा च संदंशपतितैर्व
चनिकैः स्मार्तैश्चाचमनादिभिः शाम्यति तदभावे तु स्वरूपनिष्पादने नदर्विहोमन्यायेन न निवर्त्तते दर्विहोमेषु हि स्वरूपनिष्पादनातिरि-
क्तः तथा व्यापारो न श्रूयते नाप्यतिदेशेन तत्प्राप्तिः योगीयानां धर्माणां तावन्नातिदेशो यागत्वे न होमत्वेन वैलक्षण्यात् नापि होमीया-
नां कस्य होमस्य धर्माः कस्मिन् होमे प्रवर्त्तत इति विशेषनिर्णये प्रमाणाभावात् अतो धर्मप्राप्त्यभावाद्दर्विहोमे शिष्टं भावयेत्कथमित्युत्प
न्नाप्याकांक्षा स्वरूपनिष्पादनेनैव शाम्यति एवं येष्वंगेषु संदंशाद्यभावः तत्रोत्पन्नाप्याकांक्षा तेनैव निवर्त्तते सर्वथा नदभावः तस्माद्युः

न्या॰मी॰ क्रमुक्तमभिक्रमणं प्रयाजांगमिति तद्वेदमवांतरप्रकरणं महाप्रकरणाद्दुर्बलीयः संदंशपतितानां धर्माणां कैमर्थ्याकांक्षायां प्रधानापूर्वी-
१४ त्वप्रयाजाद्यपूर्वस्य झटित्युपस्थितेरिति प्रकृतमनुसरामः तस्मिन्नुभयविधस्य प्रकरणस्य विनियोजकत्वं तदिदं स्थानादिप्रमाणाद्दुर्बलव-
त्। यत्र हि स्थानादंगत्वं तत्रान्यतरस्य प्रकारांतरेण निराकांक्षत्वेन च साकांक्षं निराकांक्षेण संबद्धुं योग्यं विना कांक्षोत्थापनेन अतश्चान्य-
तराकांक्षया यावदुभयाकांक्षारूपप्रकरणकल्पनद्वारा वाक्यादिकं कल्पयितुमारभ्यते तावत्प्रकरणेन वाक्यं कल्पयित्वा विनियोगः १
क्रियत इति स्थानात्प्रकरणस्य बलीयस्त्वम्। अतएव विदेवनादयो धर्मा अभिषेचनीयसन्निधौ पठिता अपि नाभिषेचनीयस्यांगम्। तेषां त-
दंगत्वं स्थानाद्भवेत्। न तु प्रकरणात्। अभिषेचनीयस्याव्यक्तचोदनाचोदितत्वेन ज्योतिष्टोमविकारत्वात्। प्राकृतैरेवांगैर्निराकांक्षत्वात्। किन्तु
प्रकरणाद्राजसूयांगम्॥ ननु राजसूयेन स्वाराज्यकामो यजेतेत्यत्र राजसूयशब्दस्तावन्नामधेयत्वादाख्यातपरतंत्रो यत्राख्यातं वर्त-
ते तत्रैव वर्तते न च दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यत्र यथा दर्शपूर्णमासपदं नामधेयमपि नाख्यातपरतंत्रं तत्र हि यजेतेत्याख्या-
तमविशेषात्सर्वानेव प्रकृतानाग्नेयादीन् प्रयाजादींश्चाभिधातुं समर्थं दर्शपूर्णमासपदं त्वाग्नेयादीनेव वदति न सर्वान्। अतश्च न तदाख्या-
तपरतंत्रं तथा राजसूयपदमपि किं न स्यादिति वाच्यम्। सिद्धे न हि पदेनाप्रसिद्धं निर्णीयते यथाहुः पदमज्ञातसंदिग्धं प्रसिद्धैरपृथक्श्रुति
निर्णीयते निरूढं तु न स्वार्थादपनीयते इति दर्शपूर्णमासपदं च कालनिमित्तं तद्योगश्चाग्नेयादिषूत्पत्तिवाक्यैरवगतः अतस्तद्वाचित्वे-
न दर्शपूर्णमासपदं प्रसिद्धं न चाग्नेयादीनां बहुत्वाद्द्विवचनोक्तत्वमस्यानुपपन्नमिति वाच्यम्। विहद्वाक्यद्वयसिद्धसमुदायद्वयाभिप्रायेण
तदुपपत्तेः एवं च दर्शपूर्णमासपदस्याग्नेयादिवाचित्वनिर्णीते यजेतेत्याख्यातमपि तानेव वदति नहि तदुक्तौ स्वार्थत्यागो भवति राजसू- राम॰
यपदं त्वनिर्णीतार्थम्। अतस्तदाख्यातपरतंत्रमेव तच्चाविशेषात्सर्वेष्विष्टिपशुसोमेषु विद्यते तत्परतंत्रत्वाद्राजसूयमपि तानेव वदति १४

न च राजसूयशब्दस्य राजा सूयते यत्रेति व्युत्पत्त्या सोमाभिषवनिमित्तत्वात्तस्य च सोमममभिषुणोतीति वाक्येन सोमयागेऽवगतत्वात्तद्वाचित्वमेव नेष्टिपशुवाचित्वमिति वाच्यम् नहि अभिषेचनीयादिसोमयागेष्वभिषवः प्रत्यक्षेण वाक्येन चोदितोऽस्ति तद्वाक्यस्य ज्योतिष्टोमे सत्त्वादतिदेशात्तत्संबंधोवगत इति चेन्नातिदेशस्य फलसंबंधोत्तरकालीनत्वेन राजसूयेन स्वाराज्यकामो यजेतेत्येतद्वाक्यार्थावगत्युत्तरकालीनत्वात् अनेन हि वाक्येन फलसंबंधे बोधिते पश्चात्कथंभावाकांक्षायामतिदेशकल्पनात् अतस्ततः प्रागेव एतद्वाक्यार्थो वर्णनीयः तदा चाभिषवस्यानवगतत्वाद्राजसूयपदमप्रसिद्धार्थमेव अतएव राजसूयपदम् व्युत्पन्नमश्वकर्णशब्दवदित्युक्तम् सांप्रदायिकैः एवं चाप्रसिद्धार्थत्वेनाख्यातपरतंत्रत्वाद्राजसूयपदेनेष्टिपशुसोमयागा उच्यंते ते च तैस्तैः प्राकृतैर्धर्मैर्निराकांक्षा इति न प्रकरणं विदेवनादीनां राजसूये विनियोजकम् उभयाकांक्षाया अभावात् न च प्रातिस्विकरूपैर्निराकांक्षेपि न राजसूयत्वेन रूपेण नैराकांक्ष्यमिति वाच्यम्। आकांक्षाद्वये प्रमाणाभावात् किंच प्रातिस्विकरूपैर्यो कथंभावाकांक्षा सापि फलसंबंधोत्तरकालं स च राजसूयत्वेन न तु प्रातिस्विकरूपैः। राजसूयत्वेन च फलसंबंधे उत्पन्नायाः कथंभावाकांक्षायाः विदेवनादिभिः शांतेरतिदेशकल्पनमेव न स्यात् यदि हि सामान्यरूपेण प्रातिस्विकरूपेण फलसंबंधविधायि वाक्यद्वयं भवेत्तदा प्रयुज्येतापि आकांक्षाद्वयानुसारेण विदेवनादीनामातिदेशिकानां चांगानां संबंधो न तु तदस्ति तस्मात्प्राकृतैर्धर्मैर्नैराकांक्ष्यत्वान्न विदेवनादीनां प्रकरणं विनियोजकमिति चेत्सत्यम् अतः सांप्रदायिकैर्विदेवनादीनां संदंशो दर्शितः राजसूयत्वपुरस्कारेणैव धर्मा विधीयंते राजसूयाय होता उत्सुनातीत्येवमादयस्तन्मध्ये विदेवनादयः पठ्यंते अतस्ते सर्वे राजसूयांगप्रयाजानुवादेन विधीयमानधर्ममध्ये पठितप्रयाजांगाभिक्रमणवत् तस्माद्युक्तमुक्तं विदेवनादीनां प्रकरणाद्राजसूयांगत्वमिति तत्सिद्धं प्रकरणस्य स्थानाद्बलवत्त्वम् ॥ःः॥ देशसामान्यं स्थानम्। तच्च द्विविधं पाठसादेश्यमनुष्ठानसादेश्यं चेति यथाहुः

तत्रक्रमो हि विधेर्वेष्टो देशसामान्यलक्षणः पाठानुष्ठानसादेश्याद्धि नियोगस्य कारणमिति स्थानं क्रमश्चेत्यनर्थान्तरं पाठसादेश्यमपि हि
द्विविधं यथासंख्यपाठः। सन्निधिपाठश्चेति । तत्रैन्द्राग्नमेकादशकपालं निर्वपेत् वैश्वानरं द्वादशकपालमित्येवं क्रमविहितेष्टिषु इन्द्राग्नी रोच
ना दिव इत्यादीनां याज्यानुवाक्यामन्त्राणां यथासंख्यं प्रथमस्य प्रथमं द्वितीयस्य द्वितीयमित्येवं विनियोगः स यथासंख्यपाठात् प्रथमपठितमन्त्र
स्य हि कैमर्थ्याकांक्षायां प्रथमनोविहितं कर्मैव प्रथममुपनिष्ठते समानदेशात् यानि तु वैकृतान्यङ्गानि प्राकृताङ्गानुवादेन विहितानि संदंशाप
नितानि तेषां विकृत्यर्थत्वं सन्निधिपाठात् तेषां हि कैमर्थ्याकांक्षायां फलवद्विकृत्य पूर्वमेव भाव्यत्वेन संबध्यते उपस्थितत्वात् अतएव ननु ते
षु विश्वजिन्न्यायावतारः स्वतन्त्रफलार्थत्वे विकृतिसन्निधिपाठानर्थक्यापत्तेश्च पशुधर्माणामग्नीषोमीयार्थत्वमनुष्ठानसादेश्यात् औ
पवसथ्येह्नि अग्नीषोमीयः पशुरनुष्ठीयते तस्मिन्नेव दिने ते धर्माः पठ्यन्ते अतस्तेषां कैमर्थ्याकांक्षायामनुष्ठेयत्वेनोपस्थितं पश्च पूर्वमेव
भाव्यत्वेन संबध्यते अतो युक्तमनुष्ठानसादेश्यात्तदर्थत्वं तेषां न च पाठसादेश्यादेव तत्किं न स्यादिति वाच्यं अग्नीषोमीयस्य पशोः क्रय
सन्निधौ पाठात् न च क्रयसन्निधौ तस्य पाठे तदनुष्ठानमपि तत्र स्यादिति वाच्यम्। स एष द्विदेवत्यः पशुरौपवसथ्येऽहनि आलब्धव्य इति वचना
त्तदनुपपत्तेः न च स्थानात्प्रकरणस्य बलीयस्त्वेन पशुधर्माणां ज्योतिष्टोमार्थत्वमेव किं न स्यादिति वाच्यम् तस्य सोमयागत्वेन पशुधर्म
ग्रहणेऽयोग्यत्वात् अतआनर्थक्यप्रतिहतानां विपरीतं बलाबलमिति न्यायात् स्थानात्पशुयागार्थत्वमेव पशुधर्माणां युक्तम् न च ते
षां तदर्थत्वं प्रकरणादेव किं न स्यादिति वाच्यम् अग्नीषोमीयकथंभावाकांक्षायाः क्लृप्तोपकारैः प्राकृतधर्मैरेवोपशान्तत्वात् स हि सा
न्नाय्ययागप्रकृतिकः उभयोः पशुप्रभवत्वसामान्यात् तदुक्तं सान्नाय्यं वा तत्प्रभवत्वादिति सान्नाय्यं दधिपयसी तत्र पशुयागः पयोया
गप्रकृतिकः साक्षात्पशुप्रभवत्वात् तच्चोदकप्राप्तैस्तद्धर्मैर्निराकांक्षत्वात् न पशुयागे धर्माणां प्रकरणविनियोजकं किं तु स्थानमेव तत्

देवंनिरूपिनः संक्षेपतः स्थानविनियोगः नच्च समाख्यातः प्रबलं स्थानविनियोगेहि पदार्थयोर्देशसामान्यलक्षणः संबंधः प्रत्यक्षः समा
ख्याविनियोगेतु संबंधोनप्रत्यक्षः पदार्थयोर्भिन्नदेशत्वात् नचसा संबंधवाचिका यौगिकानांशब्दानांद्रव्यवाचकत्वे नसंबंधावाचकात्वात् त
थाहि समाख्यासंबंधसामान्यवाचिकास्यात्। तद्विशेषवाचिकावानाद्यः तदुक्तौप्रयोजनाभावात्सर्व यौगिकशब्दानां पर्यापत्त्यापत्तेश्च द्वि
तीयेऽवश्यंसंबंधिनौ वाच्यौ तदंतरेणसंबंधविशेषाभावात् तत्प्रतिपत्तिमंतरेण तद्प्रतिपत्तेश्च अतश्चावश्यंसंबंधिवाचकत्वं समाख्याया
वक्तव्यम् तथाच्चनसंबंधवाचकत्वं संबंधिप्रतिपत्त्यैववाक्यार्थप्रतिपत्तिन्यायेनतत्प्रतिसंभवे तत्रशक्तिकल्पनेगौरवात् यथाहुः।
सर्वत्रयौगिकैः शब्दैः द्रव्यमेवाभिधीयते नहिसंबंधवाचित्वंसंभवत्यतिगौरवादिति तथापाकेतु पचिरेवाह कर्मारंभत्ययोप्यकः पाकयु
क्तः पुनः कर्त्तावाच्योनैकस्यकस्यचिदिति तथाचसमाख्यानसंबंधवाचिकाहोतृचमस इत्यादिकानुवैदिकीसमाख्यानिषादस्य पति
शब्दवन्नषष्ठ्यर्थसंबंधवाचिकानापिवाक्यवत्तद्बोधिका तस्याः पदत्वेनाप्रमाणत्वात् पौरोडाशिकमित्यादिसमाख्यास्त्वतिदुर्बलाः
लौकिकत्वेनपुरुषप्रत्ययसापेक्षत्वात् काण्डगोचरत्वेनतत्तत्पदार्थागोचरत्वाच्च कांडवाचिकत्वमपिनकांडत्वेन किन्तुपुरोडाशिक
त्वादिनैव नत्वेकहायनीशब्दोद्रव्यवाचकोपिगोत्वेनतद्वदत्ति किंतर्हि एकहायनीत्वेनैव स्थानविनियोगेतु पदार्थयोर्विशेषपुरस्का
रेणैवसंबंधः प्रत्यक्षप्रमाणप्रतिपन्नः अतश्चसमाख्यामुपलभ्य नूनमनयोः पदार्थयोः संबंधोऽस्तीति यावत्कल्प्यते तावत्प्रत्यक्षप्रतिपन्ने
नसंबंधेनपरस्परमाकांक्षातदभावेचसंबंधानुपपत्तेः कल्पितसंबंधेनचयावदितरत्राकांक्षादिकल्प्यते तावदन्यत्राकांक्षयावाक्यादि
कल्पनयाविनियोगः क्रियतेइतिसिद्धंस्थानस्यसमाख्यातः प्राबल्यम् अतएवशुंधनमंत्रः सान्नाय्यपात्रांगेपाठसादेश्यान्नतुपौरो
डाशिकसमाख्ययापुरोडाशपात्रांगत्वति ॥ ॐ ॥ समाख्यायौगिकः शब्दः साचद्विविधा वैदिकी लौकिकी च तत्र होतुः चमसभक्षणं ग

त्वंहोतृचमस इति वैदिकसमाख्यया अध्वर्योस्तत्तत्पदार्थागत्वं लौकिक्या आध्वर्यवमिति समाख्ययेति संक्षेपः॥ ॥ तदेवं निरूपितानि संक्षे
पतः श्रुत्यादीनि षट्प्रमाणानि एतत्सहकृतेन विनियोगविधिना समिदादिभिरुपकृत्य दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्येवंरूपेण यानि
विनियुज्यंते तान्यंगानि द्विविधानि सिद्धरूपाणि क्रियारूपाणि चेति तत्र सिद्धानि जातिद्रव्यसंख्यादीनि तानि च दृष्टार्थान्येव क्रियारूपा॰
णि च द्विविधानि गुणकर्माणि प्रधानकर्माणि च एतान्येव सन्निपत्योपकारकाण्यारादुपकारकाणीति चोच्यंते तत्र कर्मांगद्रव्याद्युद्देशेन
विधीयमानं कर्म सन्निपत्योपकारकम् यथावघातप्रोक्षणादि तच्च दृष्टार्थमदृष्टार्थं दृष्टादृष्टार्थं च दृष्टार्थमवघातादि अदृष्टार्थं प्रोक्षणा
दि दृष्टादृष्टार्थं पशुपुरोडाशयागादि तद्धि द्रव्यत्यागांशेनादृष्टं देवतोद्देशेन च देवतास्मरणं दृष्टं करोति इदमेव चाश्रयिकर्म इत्युच्यते त
च्च सन्निपत्योपकारकं द्विविधमुपयोक्ष्यमाणार्थमुपयुक्तार्थं चेति तत्रावघातप्रोक्षणाद्युपयोक्ष्यमाणार्थं व्रीहीणामुपयोक्ष्यमाणत्वात् प्र
तिपत्तिकर्म इडाभक्षणाद्युपयुक्तपुरोडाशसंस्कारकमुपयुक्तस्य कीरणकरणतानिवर्तकं कर्म प्रतिपत्तिकर्म उपयुक्तसंस्कारार्थं च कर्म उपयो
क्ष्यमाणसंस्कारार्थाद्दुर्बलम् उपयुक्तापेक्षया उपयोक्ष्यमाणेऽत्यादरात् अत एव प्रापणीयनिष्कासे उदयनीयमनुनिर्वपतीत्यत्र निष्का
सस्य निर्वापार्थत्वं न तु तस्य तदर्थं निष्कासस्योपयुक्तत्वात् इत्युक्तमेकादशे तच्च सन्निपत्योपकारकं आरादुपकारकाद्बलीयः न
न्ववघातादिर्भवतु बलीयः तस्य दृष्टार्थत्वात् आरादुपकारकस्य चादृष्टार्थत्वात् दृष्टे संभवत्यदृष्टस्यान्याय्यत्वात् प्रोक्षणादि सन्निपत्यो
पकारकं तु कथं बलीयः उभयोरदृष्टार्थत्वात् किंच आरादुपकारकं साक्षात्प्रधानांगं तस्यान्योद्देशेनाविधानात् सन्निपत्योपकारकं तु॰
अंगांगं कर्मांगव्रीह्याद्युद्देशेन विधानात्। अंगांगापेक्षया च साक्षादंगं बलीयः अंगगुणविरोधे तादर्थ्यादिति न्यायात् अत एव पश्विष्ट्या
पशुना सोमेन यजेत सोमावास्यायां वा पूर्णमास्यां वा यजेतेति अविशेषविधानेऽपि पर्वानुग्रहः सोमयागस्यैव क्रियते न तु दीक्षणी

पादेः अतः कथं सन्निपत्योपकारकस्य बलीयस्त्वम् उच्यते सत्यप्यदृष्टार्थत्वाविशेषे सन्निपत्योपकारकमारादुपकारकाद्बलीयः
सन्निपत्योपकारके हि कर्मणि उपकार्योपकारकयोर्व्रीहिप्रोक्षणयोः संबंधो वाक्यक्लृप्तः उपकारमात्रं तु कल्प्यम् आरादुपकारकस्थ
ले तु दर्शपूर्णमासप्रयाजयोः संबंधः कल्प्यः उपकारोपि किंच आरादुपकारकस्थले हि प्रकरणं विनियोजकम् इतरत्र तु व्रीहीन्प्रोक्ष
तीति वाक्यमेव व्रीहिपदेनापूर्वसाधने लक्षणां कृत्वा कृतो विनियोजकमिति बलीयस्त्वम् यच्चोक्तमंगगुणविरोधे तादर्थ्यादिति न्या
येन दुर्बलत्वमिति तदसत् नहि व्रीह्याद्युद्देशेन विधीयमानं प्रोक्षणादि तदर्थं भवति तत्स्वरूपे आनर्थक्यात् किंतु तत्संस्कारद्वारा क्र
त्वर्थमेव सन्निपत्योपकारकाणामुत्पत्त्यपूर्वप्रयुक्तत्वस्य च वक्ष्यमाणत्वात् अत उभयविधमप्यंगजातं क्रत्वर्थमेवेति नांगगुणवि
रोधन्यायावतारः दीक्षणीयादेः पर्वानुग्रहस्तदीक्षणीयाद्यर्थ एव तस्य तदपूर्वप्रयुक्तत्वात् अतो युक्तं साक्षात्प्रधानांगेन प्रधाने पर्वानुग्रहे
ण संबाध्यते इति तत्सिद्धं सन्निपत्योपकारकस्यारादुपकारकाद्बलीयस्त्वम्। अत एव स्थाणौ स्थाण्वाहुतिं जुहोतीति विहिता स्थाण्वा
हुतिर्यूपव्रश्चनस्थाणुद्वारा यूपसंस्कारार्था देवदत्तधारिता याः स्रजः शुचिदेशनिधानमिव देवदत्तसंस्कारार्थं न तु स्थाण्वाहुतिरारादु
पकारकेत्युक्तम् दशमे इति दिक् द्रव्याद्यनुद्दिश्य केवलं विधीयमानं कर्म आरादुपकारकं यथा प्रयाजादि तदेवं निरूपितं द्विविधमप्यं
गजातं तच्च न यागादिस्वरूपप्रयुक्तं स्वरूपे आनर्थक्यात् तदंतरेणापि तत्सिद्धेः किंत्वपूर्वप्रयुक्तमेव न हि तदंतरेणापूर्वं भवतीत्यत्र
किंचित्प्रमाणमस्ति तस्यादृष्टत्वात् नन्वेवं प्राधान्याददृष्टत्वाच्च फलप्रयुक्तत्वमेव किं न स्यादिति वाच्यं फलभावनायां यागस्य करण
त्वादंगानां च करणानुग्राहकत्वात्तदर्थत्वे बुद्धे तत्र चानर्थक्यप्रसक्तौ तेन स्वापूर्वमेवोपस्थाप्यते सन्निकर्षात् दीक्षणीयादिशब्देने
व तदपूर्वं न तु फलमुपस्थाप्यते विप्रकर्षादतो न तत्प्रयुक्तत्वमंगानाम् अत एव अगन्म सुवः सुवरगन्मेति मंत्रो विकृता ब्रूहिनव्यइ

त्युक्तम् नवमे फलदेवतयोश्चेत्यत्र फलप्रयुक्तेतु सौर्यादि विकृतिषु स्वर्गरूपफलाभावान्मंत्रो न प्रवर्त्तेतेन नतरां चोहितव्यः स्या — दितितत्सि
द्धमंगानामन्यप्रयुक्तत्वानुपपत्तेरपूर्वप्रयुक्तत्वं तत्रापि सन्निपत्योपकारकाणांद्रव्यदेवतासंस्कारद्वारा यागस्वरूपोपयोगादुत्पन्नापूर्वार्थ
त्वं अतस्त्वैव धर्मावघातादीनामाज्येऽप्रवृत्तिस्तेषामाग्नेयापूर्वप्रयुक्तत्वादाज्यस्य च तदर्थत्वाभावादित्युक्तं तृतीये आरादुपकारका
णां तु स्वरूपेऽनुपयोगात् परमापूर्वार्थत्वं तत्रोत्पत्त्यपूर्वस्य यागस्वरूपानुष्ठानानंतरमेवोत्पद्यमानत्वात् सन्निपत्योपकारकाणां पूर्वांगा
नां न दुत्पत्तावुपयोगः उत्तरांगानां तेषां तु न तत्स्थितावुपयोगः परमापूर्वस्य तु सांगप्रयोगानुष्ठानानंतरमेवोत्पद्यमानत्वात् सर्वेषामारा
दुपकारकाणां तदु — त्पत्तौ प्रयोगबहिर्भूतस्य तु न तत्स्थितावुपयोगः यथा बृहस्पतिसवस्य वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेति वाजपे
योत्तरकालमंगत्वेन विहितस्य वाजपेयापूर्वे स्थितावुपयोगः तस्य प्रागेवोत्पन्नत्वादित्युक्तं चतुर्थे तत्सिद्धं सर्वेषामंगानामपूर्वार्थत्वम् प्र
कृतमनुसरामः तदेवं निरूपितः संक्षेपतो विनियोगविधिः ॥ ः ॥ प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिः स चांगवाक्यैकवाक्य
तामापन्नः प्रधानविधिरेव स हि सांगं प्रधानमनुष्ठापयन् विलम्बे प्रमाणाभावादविलंबापरपर्यायं प्रयोगप्राशुभावं विधत्ते
न च विलंबवदविलंबेपि प्रमाणाभाव इति वाच्यम् विलंबे हि अंगप्रधानविध्येकवाक्यतावगततत्साहित्यानुपपत्तिः प्रसज्यते न
हि विलंबेन क्रियमाणयोः पदार्थयोः सह कृतमिति साहित्यं व्यवहरंति न चैवं साहित्यानुपपत्त्या समानकालत्वमेवस्यान्नत्वविलंबो
ऽव्यवधानेन पूर्वोत्तरकालक्रियमाणपदार्थयोरविलंबेन कृतमिति व्यवहारादिति वाच्यम् अनेकपदार्थानामेकस्मिन्कालेऽनुष्ठाना
नुपपत्तेः । न च तावत्कर्तृसंपादनेनानुष्ठानं किं न स्यादिति वाच्यम् तस्यै तस्य यज्ञक्रतोश्चत्वार ऋत्विज इत्यादिना कर्तृणां नियतत्वा
त् तस्मादंगवाक्यैकवाक्यतामापन्नः प्रधानविधिरेकवाक्यतावगततत्साहित्यं विदधदुक्तविधया एककालानुष्ठानानुपपत्तेरविलं

बं विधत्ते इति सिद्धं प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिरिति स चाविलंबो नियते क्रमे आश्रीयमाणे भवति अन्यथा हि किमेतदनंत
रमेतत्कर्त्तव्यमेतदनंतरं वेति प्रयोगविक्षेपापत्तेः अतः प्रयोगविधिरेव स्वविधेयप्रयोगप्राशुभावसिद्ध्यर्थं नियतं क्रममपि पदार्थविशेषण
तया विधत्ते तत्र क्रमो नाम विततिविशेषः पौर्वापर्यरूपो वा तत्र षट् प्रमाणानि संति श्रुत्यर्थपाठस्थानमुख्यप्रवृत्त्याख्यानि तत्र क्रमपरवच
नं श्रुतिः तच्च द्विविधं केवलक्रमपरं तद्विशिष्टपदार्थपरं चेति तत्र वेदं कृत्वा वेदिं करोतीति केवलक्रमपरं वेदिकरणादेर्वचनांतरेण विहि ९
तत्वात् वषट्कर्तुः प्रथमभक्ष इति तु क्रमविशिष्टपदार्थपरं एकप्रसरताभंगभयेन भक्षानुवादेन क्रममात्रस्य विधातुमशक्यत्वात् सेयं
श्रुतिरितरप्रमाणापेक्षया बलवती तेषां वचनकल्पनद्वारा क्रमप्रमाणत्वात् अत एवाश्विनस्य पाठक्रमात्तृतीयस्थाने ग्रहणप्रसक्तावाश्वि
नो दशमो गृह्यत इति वचनाद्दशमस्थाने ग्रहणमित्युक्तम् यत्र तु प्रयोजनवशेन निर्णयः स अर्थक्रमः यथाऽग्निहोत्रयवागूपाकयोः अत्र हि
यवाग्वा होमार्थत्वेन तत्पाकः प्रयोजनवशेन पूर्वमनुष्ठीयते स चायं पाठक्रमात् बलवान् यथापाठं त्वनुष्ठाने कृतस्य प्रयोजनबाधो दृष्टार्थ
त्वं च स्यात् न हि होमानंतरं क्रियमाणस्य किंचिद् दृष्टं प्रयोजनमस्ति पदार्थबोधकवाक्यानां यः क्रमः स पाठक्रमः तस्माच्च पदार्थानां क्रम आ
श्रीयते येन हि क्रमेण वाक्यानि पठितानि तेनैव क्रमेणाधीतान्यर्थप्रत्ययं जनयंतीति यथार्थप्रत्ययं च पदार्थानामनुष्ठानात् स च पाठो द्विविधः
मंत्रपाठो ब्राह्मणपाठश्चेति तत्राग्नेयाग्नीषोमीययोस्तत्तद्याज्यानुवाक्यानां क्रमाद्यः क्रमः आश्रीयते स मंत्रपाठात् स चायं मंत्रपाठो ब्रा
ह्मणपाठाद्बलवान् अनुष्ठाने ब्राह्मणवाक्यापेक्षया मंत्रवाक्यस्यांतरंगत्वात् ब्राह्मणवाक्यं हि प्रयोगाद्बहिरेवेदमेवं कर्त्तव्यमित्येवम
वबोध्य कृतार्थमिति न पुनः प्रयोगकाले व्याप्रियते मंत्राः पुनरनन्यप्रयोजनाः प्रयोगसमवेतार्थस्मारका इति वक्ष्यामः तेनानुष्ठानक्र
मस्य स्मरणक्रमाधीनत्वात् तत्क्रमस्य च मंत्रक्रमाधीनत्वादंतरंगो मंत्रपाठ इतरस्मादिति बलवान् अत एवाग्नेयाग्नीषोमीययोर्ब्राह्मण

पाठादादावग्नीषोमीयानुष्ठानं पश्चादाग्नेयानुष्ठानमित्येवं क्रमं बाधयित्वा मंत्रपाठादादावाग्नेयानुष्ठानं पश्चादग्नीषोमीयस्येत्येवं क्रम इत्युक्तम् प्रयाजानां समिधो यजति तनूनपातं यजतीत्येवं विधायकवाक्यक्रमाद्यः क्रमः स ब्राह्मणपाठक्रमः अत्र च यद्यपि ब्राह्मणवाक्यान्यर्थविधायकृतार्थानि तथापि प्रयाजानां स्मारकान्तरस्याभावात्तान्येव स्मारकत्वेन स्वीक्रियन्ते तथा च येन क्रमेण तान्यधीतानि तेनैव क्रमेणार्थस्मरणं जनयन्तीति युक्तं तेनैव क्रमेण तेषामनुष्ठानमिति तत्सिद्धं प्रयाजानां ब्राह्मणपाठक्रमात्क्रम इति ननु प्रयाजेषु प्रयोगसमवेतार्थस्मारकत्वं विधायकत्वेन कृतार्थानां ब्राह्मणवाक्यानां किमिति स्वीक्रियते प्रयोगसमवेतार्थस्मारकाणां याज्यामंत्राणामाग्नेयादिष्विवात्रापि सत्त्वात् न च तेषां देवतास्मारकत्वात्कर्मस्मारकत्वेन ब्राह्मणवाक्यं स्वीक्रियत इति वाच्यम् आग्नेयादिष्वपि कर्मस्मारकत्वेन तत्स्वीकारापत्तेः न चेष्टापत्तिः तथा सति ब्राह्मणपाठान्मंत्रपाठस्य बलीयस्त्वं न स्यात्तद्बलीयस्त्वे हि मंत्राणां प्रयोगसमवेतार्थस्मारकत्वमितरस्य तदस्मारकत्वं हेतुः यदि च कर्मस्मारकत्वं ब्राह्मणवाक्यस्य स्वीक्रियते तदा प्रधानस्मारकत्वेन ब्राह्मणवाक्यस्यान्तरंगत्वादंगभूतदेवतास्मारकत्वेन च मंत्राणां बहिरंगत्वान्मंत्रपाठाद्ब्राह्मणपाठस्यैव बलीयस्त्वं स्यात् तथा च मंत्रतस्कविरोधः स्यादिति पांचमिकाधिकरणविरोधः तत्र हि ब्राह्मणपाठान्मंत्रपाठस्य बलीयस्त्वादादावग्नेयानुष्ठानं पश्चादाग्नीषोमीयस्येत्युक्तम् अथाग्नेयादिषु याज्यामंत्रा एव देवताप्रकाशनद्वारा कर्मप्रकाशकास्त्यज्यमानद्रव्योद्देश्यत्वरूपत्वाद्देवतात्वस्येति चेत्तुल्यं प्रयाजेषु तत्रापि याज्यामंत्रा देवताप्रकाशकाः प्रयाजेषु देवताया मांत्रवर्णिकत्वात् तथा च प्रयाजेषु याज्यामंत्राणां देवताप्रकाशनद्वारा कर्मप्रकाशकत्वात्तत्क्रमो मंत्रपाठादेव स्यान्न तु ब्राह्मणपाठक्रमात् न च मंत्रपाठस्यान्यादृशत्वात् प्रयाजक्रमो ब्राह्मणपाठक्रमादेवेति वाच्यम् अन्यादृशत्वे तस्यैव क्रमस्यानुष्ठानं स्यात् मंत्रक्रमस्य बलीयस्त्वात् अभ्यासाधिकरणे च वार्त्तिककृता क्रमविनियुक्त्यैवं लिंगकमंत्रवर्णैस्तथा

दिनाप्रयाजेषुयाज्यामंत्राणांक्रमविनियोगउक्तः नवमेतंत्ररत्नेसमिधोऽग्नेआज्यस्यव्यं त्वित्यादिक्रमप्रकरणप्राप्तैर्मंत्रैर्देवतागुणत्वेन
समर्प्यंतइत्युक्तम् मंत्राणामन्यादृशक्रमत्वेतदनुपपत्तिःस्यात्तत्कथंप्रयाजेषुब्राह्मणपाठक्रमात्क्रमइत्युच्यतेसत्यमेतत्तथापियत्रार्थ
स्मारकामं त्रानसंत्येव यथातूष्णींविहितेषुकर्मसुतेषांक्रमोब्राह्मणपाठक्रमात् तत्रतेषामेवप्रयोगसमवेतार्थस्मारकत्वात् प्रयाजो
दाहरणंतुकृत्वाचिंतयाततत्रब्राह्मणवाक्यानांप्रयोगसमवेतार्थस्मारकत्वाभावात् यथाहुरर्थवादत्वरणेवार्त्तिककाराः प्रयाजादिवाक्या
न्यर्थंसमर्प्यचरितार्थानिस्वरूपसंस्पर्शेसत्यपिप्रयोज्यतानप्रतिपद्यंतेइतितस्मात्समंत्रककर्मणांपाठक्रमोमंत्रपाठात् अमंत्रकपाठ
क्रमस्तुब्राह्मणपाठक्रमादेवेतिदिक् प्रकृतौनानादेशानांपदार्थानांविकृतौवचनादेकस्मिन्देशेऽनुष्ठानेकर्त्तव्येयस्यदेशेऽनुष्ठीयंतेतस्य
प्रथममनुष्ठानमितरयोश्चपश्चात् अयंक्रमःसस्थानक्रमःस्थानंनामोपस्थितिः यस्यहिदेशेऽनुष्ठीयंतेतत्पूर्वेननेपदार्थेकृतेसएवप्रथम-
मुपस्थितोभवतीतियुक्तं तस्यप्रथममनुष्ठानं अतएवसाद्यस्केऽग्नीषोमीयसवनीयानुबंध्यानांसवनीयदेशेसहानुष्ठानेकर्त्तव्येआदौसवनी
यपशोरनुष्ठानंतस्मिन्देशेआश्विनग्रहणानंतरंसवनीयस्यैवप्रथममुपस्थितेः इतरयोस्तुपश्चात् तथाहि ज्योतिष्टोमेत्रयःपशुयागाःअ
ग्नीषोमीयःसवनीयःआनुबंध्यश्चेति तेचभिन्नदेशाः आग्नीषोमीयऔपवसथ्येह्निसवनीयःसुत्याकालेआनुबंध्यस्त्वंतेसाद्यस्कोना
मसोमयागविशेषस्तत्राव्यक्तत्वाज्ज्योतिष्टोमविकारः।अतस्तत्रयोपिपशुयागाःसाद्यस्केचोदकप्राप्ताः।तेषांचतत्रसाहित्यंश्रुतंसह
पशूनालभेतइति तच्चसाहित्यंसवनीयदेशेतस्यप्रधानप्रत्यासत्तेः।स्थानातिक्रमसाम्याच्चसवनीयदेशेह्यनुष्ठानेक्रियमाणेअग्नीषो-
मीयानुबंध्ययोःस्वस्वस्थानातिक्रममात्रंसंभवति अग्नीषोमीयदेशेह्यनुष्ठानेक्रियमाणेसवनीयस्यस्वस्थानातिक्रममात्रं आनुबंध्य
स्यतुस्वस्थानातिक्रमःसवनीयस्यानातिक्रमश्चस्यात् एवमानुबंध्यदेशेऽग्नीषोमीयस्यद्रष्टव्यः तथाचसवनीयस्यदेशेसर्वेषामनु

ष्ठाने कर्त्तव्ये सवनीयस्य प्रथममनुष्ठानम् आश्विनग्रहणानन्तरं हि सवनीयदेशः प्रकृतौ आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सव
नीयं पशुमुपाकरोतीत्याश्विनग्रहणानंतरं तस्य विहितत्वात् तथा च साद्यस्क्रे प्याश्विनग्रहणे कृते सवनीयस एवोपस्थितो भवतीति युक्तं तस्य
स्थानात्प्रथममनुष्ठानमितरयोश्च पश्चादित्युक्तम् प्रधानक्रमेण योंगानां क्रम आश्रीयते स मुख्यक्रमः। येन क्रमेण प्रधानानि क्रियंते तेनै
व क्रमेण तेषामंगान्यनुष्ठीयंते चेत्तदा सर्वेषामंगानां स्वप्रधानैस्तुल्यं व्यवधानं भवति व्युत्क्रमेणात्वनुष्ठाने केषांचिदंगानां स्वैः प्रधानैरत्यन्त
मव्यवधानमन्येषामत्यन्तव्यवधानं स्यात् तच्चायुक्तं प्रयोगविध्यवगतसाहित्यबाधापत्तेः अतः प्रधानक्रमोपि अंगक्रमे हेतुः अत एव
प्रयाजशेषेणादावाग्नेयहविषोभिघारणं पश्चादैंद्रस्य दध्नः आग्नेययागेंद्रयागयोः पौर्वापर्यात् अत्र हि द्वयोरभिघारणयोः स्वेन स्वेन प्रधा
नेन तुल्यमेकान्तरितव्यवधानं भवति आग्नेयहविरभिघारणाग्नेययागयोरैंद्रयागहविरभिघारणेन व्यवधानात् ऐंद्रयागहविरभिघारणैं
द्रयागयोश्चाग्नेययागेन व्यवधानात् अतश्चादावाग्नेयहविरभिघारणं तत ऐंद्रस्य हविषः तत आग्नेययागः ततश्चैन्द्रयाग इत्येवं क्र
मो मुख्यक्रमात्सिद्धो भवति यदि त्वादावैंद्रहविरभिघारणं तत आग्नेयस्य हविषोभिघारणं क्रियते तदा याज्यानुवाक्याक्रमवशादादावा
ग्नेयस्यानुष्ठानादाग्नेययागतदंगहविरभिघारणयोरत्यन्तमव्यवधानमैंद्रयागतदंगहविरभिघारणयोरत्यंतव्यवधानं स्यात् तच्चानयुक्त
म् अतो युक्तः प्रयाजशेषेणाभिघारणस्य मुख्यक्रमात्क्रम इति स चायं मुख्यक्रमः पाठक्रमाद्दुर्बलः मुख्यक्रमो हि प्रमाणांतरसापेक्षप्रधा
नक्रमप्रतिपत्तिसापेक्षतया विलंबितप्रतिपत्तिकः पाठक्रमस्तु निरपेक्षस्वाध्यायपाठक्रममात्रसापेक्ष न यान तथेति बलवान् अत एवा
ग्नेयोपांशुयाजाग्नीषोमीयानां क्रमेणानुष्ठीयमानानामप्युपांशुयाजाज्यनिर्वापो मुख्यक्रमात्पूर्वमनुष्ठीयते तस्य दुर्बलत्वात् पाठक्र
मात्तु पश्चादनुष्ठीयते तस्य प्रबलत्वादिति स चायं मुख्यक्रमः प्रवृत्तिक्रमाद्बलवान् प्रवृत्तिक्रमे त्वाश्रीयमाणे बहूनामंगानां प्रधानविप्र

कर्षो भवति अस्मिंस्तु आश्रीयमाणे सन्निकर्षः तद्यथा दर्शपूर्णमासयोरादावाग्नेयानुष्ठानं ततः सान्नाय्यस्य तद्धर्माश्च केचित्पूर्वमनुष्ठीय
न्ते तत्र यदि प्रवृत्तिक्रममाश्रित्य तद्धर्माः सर्वे पूर्वमनुष्ठीयेरन् तत आग्नेयधर्माः तत आग्नेयानुष्ठानं ततः सान्नाय्यानुष्ठानं तदा तद्धर्माणां
स्वप्रधानेन सहद्वाभ्यामाग्नेयतद्धर्मानुष्ठानाभ्यां विप्रकर्षः स्यात् यदा तु सान्नाय्यधर्माणां केषांचित्पूर्वमनुष्ठानेपि अन्येसर्वे मुख्यक्रममाश्रि
त्याग्नेयधर्मानुष्ठानानंतरमनुष्ठीयंते तदा सर्वेषामाग्नेयधर्मसान्नाय्यधर्माणामेकैकेन विजातीयेन व्यवधानं भवति आग्नेयधर्माणां स्वप्र
धानेन सह सान्नाय्यधर्मैर्व्यवधानात् सान्नाय्यधर्माणां च स्वप्रधानेन सहाग्नेयानुष्ठानेन व्यवधानादिति न विप्रकर्षः तस्मान्मुख्यक्रमः प्र
वृत्तिक्रमाद्बलवान् सह प्रयुज्यमानेषु प्रधानेषु सन्निपतितानामंगानामावृत्त्यानुष्ठाने कर्त्तव्ये द्वितीयादिपदार्थानां प्रथमानुष्ठितपदार्थ
क्रमात् यः क्रमः स प्रवृत्तिक्रमः यथा प्राजापत्यागेषु प्राजापत्या हि वैश्वदेवीं कृत्वा प्राजापत्यैश्चरंतीति वाक्येन तृतीयानिर्देशात् सेतिक
र्त्तव्यताकाः एककालत्वेन विहिताः अतस्तेषां तदंगानां चोपाकरणनियोजनप्रभृतीनां साहित्यं संपाद्यं तत्र प्राजापत्यानां संप्रतिपन्नदेवता
कत्वेनैकस्मिन्काले ऽनुष्ठानादुपपद्यते साहित्यं तदंगानां चैकस्मिन्काले ऽनुष्ठानमशक्यं न ह्यनेकेषां पशूनामुपाकरणमेकस्मिन् काले
कर्त्तुं शक्यं अतस्तेषां साहित्यमव्यवधानेनानुष्ठानात्संपाद्यमेकस्योपाकरणं कृत्वा ऽपरस्योपाकरणमिति अतः प्राजापत्येषु एकपदा
र्थे सर्वत्रानुष्ठाय द्वितीयपदार्थोनुष्ठेयः तत्र प्रथमपदार्थानुष्ठानं कस्माच्चित्पशोरारभ्य कर्त्तव्यं द्वितीयस्तु पदार्थो येन क्रमेण प्रथमोनु
ष्ठितः तेनैव क्रमेणानुष्ठेयः प्रयोगविध्यवगतस्य मिथोंगसाहित्यस्योपपत्तये प्रयोगविधिना हि देशेन तदंगानामुपाकरणनियोजनादीनां
मिथः साहित्यमानंतर्यापरपर्यायं विहितं तच्च साहित्यं सवनीयपशौ चोदकेन प्राप्तं तस्य प्राणिद्रव्यकत्वेन दैश्यविकृतित्वात् सवनी
याच्चैकादशिनेषु प्राप्तं सुत्याकालत्वसामान्यात् । तेभ्यश्च प्राजापत्येषु प्राप्तं गुणत्वसामान्यात् प्राजापत्येषु च प्रतिपशु यागभेदाच्चोदकाः

भिद्यन्ते अतश्चोदकात्तत्साङ्गभूतानामुपाकरणनियोजनादीनां साहित्यमानन्तर्यापरपर्यायं प्राप्तमतएवैकस्य पशोरुपाकरणानन्तरमेव नियोज
नं चोदकबलात्कर्तव्यत्वेन प्राप्तं तच्च न क्रियते प्रत्यक्षवचनावगतसर्वपश्वङ्गसाहित्यानुपपत्तेः अतएकस्मिन् पशावुपाकरणे कृते तदनन्तरमेव
कर्त्तव्यत्वेन प्राप्तमपि नियोजनं न क्रियते प्रत्यक्षवचनबलात्तु पश्वन्तरेषु षोडशसु उपाकरणमेव क्रियते कृते न तु तेषूपाकरणे प्रथमपशोर्नियो
जनस्य तदीयोपाकरणेन व्यवधाने प्रमाणाभावात् प्रथमपशावेव नियोजनं कार्यम् अतश्च येन क्रमेणोपाकरणं कृतं तेन क्रमेण नियोजनं
कार्यम् एवं च तत्तत्पशूपाकरणानां स्वस्वनियोजनैस्तुल्यं षोडशक्षणैर्व्यवधानं भवति अन्यथा केषांचिदत्यन्तव्यवधानं केषांचिच्चाव्यव
धानं स्यात् तच्च न युक्तं तस्माद्येन क्रमेण प्रथमतः पदार्थोनुष्ठितस्तेनैव द्वितीयोनुष्ठेयः तत्सिद्धं प्रथमानुष्ठितपदार्थक्रमाद्यो द्वितीयपदा
र्थक्रमः स प्रवृत्तिक्रम इति तदेवं निरूपितः संक्षेपतः षड्विधक्रमनिरूपणेन प्रयोगविधिव्यापारः ॥ॐ॥ फलस्वाम्यबोधको विधिरधि
कारविधिः फलस्वाम्यं च कर्मजन्यफलभोक्तृत्वं स च यजेत स्वर्गकाम इत्येवंरूपः अनेन हि स्वर्गमुद्दिश्य यागं विदधता स्वर्गकामस्य याग
जन्यफलभोक्तृत्वं प्रतिपाद्यते यस्याहिताग्नेरग्निर्गृहान्दहेत् सोग्नयेक्षामवतेःष्टाकपालं निर्वपेदित्यादिभिस्त्वग्निदाहादौ निमित्ते कर्म
विदधद्भिर्निमित्तवतः कर्मजन्यपापक्षयरूपफलस्वाम्यं प्रतिपाद्यते तच्च फलस्वाम्यं तस्यैव योधिकारिविशेषणविशिष्टः अधिकारिविशे
षणं तदेव यत्पुरुषविशेषणत्वेन श्रुतं अतएव राजा राजसूयेन स्वाराज्यकामो यजेतेत्यनेन स्वाराज्यमुद्दिश्य राजसूयं विदधतापि न
स्वाराज्यकाममात्रस्य तत्फलभोक्तृत्वं प्रतिपाद्यते किंतु राज्ञः स तस्य तत्कामस्य किंचित्तु पुरुषविशेषणत्वेनाश्रुतमप्यधिकारिविशेषणं भ
वति यथाध्ययनविधिसिद्धा विद्या अग्निसाध्येषु च कर्मसु आधानसिद्धाग्निमत्ता सामर्थ्यं चैतेषां पुरुषविशेषणत्वेनाश्रवणेप्यधिकारिविशेषणत्वमस्त्येव उ
त्तरक्रतुविधीनां ज्ञानाक्षेपशक्त्यभावेनाध्ययनविधिसिद्धज्ञानवंतं प्रत्येव प्रवृत्तेः अग्निसाध्यकर्मणां चानपेक्षत्वेन तद्विधीनामाधानसिद्धाग्निमंतं प्रत्ये

वप्रश्नेः अतएवचशूद्रस्य नयागाधिकारः तस्याध्ययनविधिसिद्धज्ञानाभावात् आधानसिद्धाग्निअभावाच्च अध्ययनस्योपनीताधिका
रत्वात् उपनयनस्यचाष्टवर्षंब्राह्मणमुपनयीतेत्यादिनात्रैवर्णिकाधिकारत्वात् आधानस्यापिवसंतेब्राह्मणोग्नीनादधीतेत्यादिनात्रैवर्णि
काधिकारत्वात् यद्यपिचवर्षासुरथकारोग्नीनादधीतेत्यनेनरथकारस्यसौधन्वनपरपर्यायस्याधानंविहितंयोगाद्रूढेर्बली यस्त्वात् तथापि
नास्योत्तरकर्मस्वधिकारः अध्ययनविधिसिद्धज्ञानाभावात् नचतदभावेआधानेपिकथमधिकारः तदनुष्ठानस्यतत्साध्यत्वादिति वाच्यं
।तस्याध्ययनविधिसिद्धज्ञानाभावेपिवर्षासुरथकारोग्नीनादधीतेत्यनेनैवविधिनाधानमात्रौपयिकज्ञानापेक्षणात् अन्यथातस्यैवविः
धानानुपपत्तेः अतश्चरथकारस्याधानमात्रेधिकारेपिनोत्तरकर्मस्वधिकारोविद्याभावात् एवंचतदाधानंनाग्निसंस्कारार्थंसंस्कृताना
मग्नीनामुत्तरत्रोपयोगाभावात् किंतुतदाधानंलौकिकाग्निगुणकंविश्वजिन्न्यायेनस्वर्गफलंचस्वतंत्रमेवप्रधानकर्मविधीयतेअग्नीनिति
चद्वितीयासक्तूञ्जुहोतीतिवत्तृतीयार्थ इति प्रकृतमनुसरामः तत्सिद्धं शूद्रस्याध्ययनविधिसिद्धज्ञानाभावादाधानसिद्धाग्न्यभावा
च्चनोत्तरकर्मस्वधिकारइति नन्वेवंस्त्रिया अधिकारोनस्यात् तस्याअध्ययनप्रतिषेधेनहिविधिसिद्धज्ञानाभावात् नचनास्त्येवेतिवाच्यम्
यजेतस्वर्गकामइत्यादौस्वर्गकामपदस्योद्देश्यसमर्पकत्वेनपुंस्त्वस्योद्देश्यविशेषणत्वात् ग्रहैकत्ववदविवक्षितत्वेनस्त्रियाअधिकारस्यसा
धितत्वादितिचेत्सत्यम् अधिकारःसाधितो नतुस्वातंत्र्येण नस्त्रीस्वातंत्र्यमर्हतीत्यादिनातस्यनिषिद्धत्वात् स्वातंत्र्येणकर्तृत्वेप्रयोगद्वय
स्यापिवैगुण्यापत्तेश्चयजमानप्रयोगेपत्नीकर्तृकाज्यावेक्षणादिलोपप्रसंगात् पत्नीप्रयोगेचयजमानकर्तृकाज्यावेक्षणादिलोपात् अ
तोदंपत्योः सहाधिकारः सहाधिकारत्वेचयजमानविषयेवपत्न्याअपिकार्यसिद्धेर्नज्ञानंविनातस्याअधिकारानुपपत्तिः पाणिग्रहणात्तुस
हत्वंसर्वकर्मसुतथापुण्यफलेष्विति वचनेनस्त्रियाःअधिकारनिर्णयाच्चनिषादस्थपतेरिवाध्ययनविधिसिद्धज्ञानविरहिणोपि एतया

निषादस्थपतिं याजयेदिति वचनान्निषादेष्ट्यां निषादस्थपतिशब्दे हि निषादश्चासौ स्थपतिश्चेति कर्मधारयो न तु निषादानां स्थपतिरिति षष्ठी
तत्पुरुषः षष्ठ्यर्थे लक्षणापत्तेः एतावांस्तु विशेषः निषादस्याध्ययनविधिसिद्धज्ञानाभावेन एतस्यैव विधेस्तत्कर्मौपयिकज्ञानाक्षेपकत्व
म् पत्न्यास्तु तादृशज्ञानाभावेपि यजमानेन सहाधिकारात्तस्य च तादृशज्ञानवत्त्वात्तेनैव च तस्याः कार्य्यसिद्धेर्नोत्तरत्र क्रतुविधीनां ज्ञाना
क्षेपकत्वं ये तु पत्नीमात्रकर्तृकाः पदार्थाः आज्यावेक्षणादयस्ते ज्ञानं विनाऽशक्यानुष्ठाना इति तद्विधीनां तदाक्षेपकत्वम् स्वीक्रियतेइ
ति तत्सिद्धमध्ययनविधिसिद्धज्ञानस्याधानसिद्धाग्निमत्त्वा पाश्चोत्तरकर्मसु अधिकारिविशेषणत्वमिति एवं सामर्थ्यस्यापि अधिकारिविशे
षणत्वम् असमर्थं प्रतिविध्यप्रवृत्तेः ॥ आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणीति न्यायात् तच्च सामर्थ्यं काम्यकर्मणि अंगप्रधानविष
यं न त्वंगासमर्थः प्रधानमात्रसमर्थश्च काम्यकर्मण्यधिकारी प्रधानविधेरंगविध्येकवाक्यतापन्नस्य सांगकर्मसमर्थं प्रत्येव प्रवृत्तेः यथा
विनियोगमधिकारित्वात् यदि हि समर्थं प्रत्येव प्रवृत्तौ कयाचित् श्रुत्या विरोधः स्यात् तदाऽसमर्थस्याप्यधिकारः स्यात् न च विरोधोस्ति स्वर्ग
कामश्रुतेः समर्थं प्रति प्रवृत्तौ विरोधाभावात् प्रत्युतासमर्थं प्रति प्रवृत्तौ प्रधानविधेरंगवाक्यैकवाक्यतयापन्नस्यांगसाहित्यस्य बाधापत्तेः
नित्यवत् श्रुतानामंगानां पाक्षिकत्वप्रसंगाच्च अतः सांगप्रयोगे समर्थस्यैव काम्यकर्मण्यधिकारः नित्यकर्मणां त्वंगेषु यथाशक्तिन्यायः ता
नि हि यावज्जीवश्रुत्या यावज्जीवकर्त्तव्यत्वेन चोदितानि न च यावज्जीवं केनापि सांगः प्रयोगः कर्त्तुं शक्यते अतो नित्यकर्मसु प्रधानमात्रेस
मर्थोऽधिकारी अंगानि तु यावन्ति कर्त्तुं शक्यन्ते तावंति कार्याणीत्यास्तां बहूक्त्या सूरिभिः पराक्रांतत्वात् तत्सिद्धं फलस्वाम्यबोधको विधिर
धिकारविधिरिति तदेवं निरूपितं चतुर्धाभेदनिरूपणेन विधेः प्रयोजनवदर्थपर्यवसानम् ॥ ❀ ॥ मंत्राणांच प्रयोगसमवेतार्थस्मारकतयार्थव
त्वम् न तु तदुच्चारणमदृष्टार्थं दृष्टे संभवति अदृष्टस्यान्याय्यत्वात् न च दृष्टस्य प्रकारांतरेणापि संभवात् मंत्राम्नानमनर्थकम् मंत्रैरेव स्मर्त

व्यमितिनियमविध्याश्रयणात् साधनद्वयस्य पक्षप्राप्तौ अन्यतरस्य साधनस्याप्राप्ततादशायां यो विधिः स नियमविधिः यथाहुः विधिरत्यंतमप्राप्ते
नियमः पाक्षिके सति तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते इति अस्यायमर्थः यस्य यदर्थत्वं प्रमाणांतरेणाप्राप्तं तस्य तदर्थत्वेन यो विधिः स अपू-
र्वविधिः यथा यजेत स्वर्गकाम इत्यादिः यागस्य हि स्वर्गार्थत्वं न प्रमाणान्तरेण ज्ञायते किन्त्वनेनैव विधिनेति भवत्ययमपूर्वविधिः पक्षे प्राप्तस्य तु यो
विधिः स नियमविधिः यथा व्रीहीनवहन्यादित्यादिः अनेन हि विधिना अवघातस्य न वैतुष्यार्थत्वं बोध्यते अन्वयव्यतिरेकसिद्धत्वात् किन्तु नियमः स चाप्राप्तां-
शपूरणं वैतुष्यस्य हि नानोपायसाध्यत्वात् यस्यां दशायामवघातं परित्यज्योपायान्तरं गृह्णीतुमारभते तस्यां दशायामवघातस्याप्राप्तत्वेन तद्वि-
धानात्मकमप्राप्तांशपूरणमेवानेन विधिना क्रियते अतश्च नियमविधावप्राप्तांशपूरणात्मको नियम एव वाक्यार्थः पक्षेऽप्राप्ततादशायामवघा-
तविधानमिति यावत् न त्वपूर्वविधाविवात्यन्ताप्राप्तयागविधानमिति उभयस्य युगपत्प्राप्तौ इतरव्यावृत्तिपरो विधिः परिसंख्याविधिः यथा
पंच पंच नखा भक्ष्या इति इदं हि वाक्यं न भक्षणविधिपरं तस्य रागतः प्राप्तत्वात् नापि नियमपरं पंचनखापंचनखभक्षणस्य युगपत्प्राप्तेः पक्षेऽ-
प्राप्त्यभावात् अतः इदम् पंचनखभक्षणनिवृत्तिपरमिति भवति परिसंख्याविधिः सा च परिसंख्या हि द्विविधा श्रौती लाक्षणिकी चेति तत्राऽ-
त्रैवावयन्तीत्यत्र श्रौती परिसंख्या एवकारेण पवमानातिरिक्तस्तोत्रव्यावृत्तेरभिधानात् पंच पंच नखा भक्ष्या इत्यत्र तु लाक्षणिकी इतरनिवृ-
त्तिवाचकस्य पदस्याभावात् अतस्त्वैषा त्रिदोषग्रस्ता दोषत्रयं च श्रुतहानिरश्रुतकल्पना प्राप्तबाधश्चेति श्रुतस्य पंचनखभक्षणस्य हा-
नात् अश्रुतापंचनखभक्षणनिवृत्तिकल्पनात् प्राप्तस्य चापंचनखभक्षणस्य बाधनादिति अस्मिंश्च दोषत्रये दोषद्वयं शब्दनिष्ठं प्राप्तबा-
धस्तु दोषोऽर्थनिष्ठ इति दिक्। तस्मिंश्च मंत्रैरेव स्मर्तव्यमिति नियमविध्याश्रयणात् न मंत्राम्नानमनर्थकम्। अतश्च युक्तं मंत्राणां प्रयो-
गसमवेतार्थस्मारकतयार्थवत्त्वं तत्र ये मंत्राः यत्र पठितास्तेषां तत्र यद्यर्थप्रकाशनं प्रयोजनं संभवति तदा तत्रैव विनियोगः येषां तु न संभवति

तेषांयत्रसंभवतितत्रोत्कर्षः यथापूषानुमंत्रणमंत्राणामित्युक्तम् येषांक्वापिनसंभवति तदुच्चारणस्यत्वगत्याः दृष्टार्थत्वंसर्वथापितुतेषांना
नर्थक्यमिति नामधेयानांविधेयार्थपरिच्छेदकतयार्थवत्वम् तथाहि उद्भिदायजेतपशुकामइत्यत्रहिउद्भिच्छब्दोयागनामधेयं तेनचविधे
यार्थपरिच्छेदः क्रियते।नेनहिवाक्येनाप्राप्तत्वात्फलोद्देशेनयागोविधीयते यागसामान्यस्याविधेयत्वाद्यागविशेषएवविधीयतेतत्रकोसौविशे
षइत्यपेक्षायांतुउद्भिच्छदात् उद्भिद्रूपोयागइतिज्ञायते उद्भिदायागेनेतिसामानाधिकरण्येननामधेयान्वयात् तस्यचयजिनासामानाधिक
रण्यंननीलोत्पलादिशब्दवत् तत्रहिउत्पलशब्दस्यार्थादुत्पलादन्योनीलशब्दस्यवाच्यो।स्तिनीलगुणः लक्षणयातुनीलशब्दस्यद्र
व्यपरत्वेनसामानाधिकरण्यं उद्भिच्छब्दस्यतुयज्यवगतयागविशेषान्नान्योवाच्योर्थोस्तिविशेषवाचित्वात् तस्यअतश्चार्थान्तरवा
चित्वाभावेननामधेयस्यनीलशब्दवत् नसामानाधिकरण्यंकिंतर्हिवैश्वदेव्यामिक्षेत्यत्रामिक्षावत् वैश्वदेवीशब्दस्यहिदेवतानद्धि
तांतत्वात्तद्धितस्यचसास्यदेवतेतिसर्वनामार्थस्मरणात् सर्वनाम्नांचोपस्थितविशेषवाचित्वेनविशेषपरत्वे तत्रकोसौवैश्वदेवीशब्दो
पात्तोविशेषइत्यपेक्षायांआमिक्षापदसान्निध्यादामिक्षारूपोविशेषइत्यवगम्यते यथाहुः आमिक्षांदेवतायुक्तांवदत्येवैषतद्धितः।आमि
क्षापदसानिध्यात्तस्यैवविषयार्पणमिति तथाश्चत्यैवोपपदस्यार्थः सर्वनाम्नापनीयतेतदर्थस्तद्धितेनैवत्रयाणामेकवाक्यतेति तस्माद्य
थावैश्वदेवीशब्दोपात्तविशेषसमर्पकत्वेनामिक्षापदस्यवैश्वदेवीशब्देनसामानाधिकरण्यंएवंसामान्यस्याविधेयत्वाद्यज्यवगतविशे
षसमर्पकत्वेननामधेयस्ययजिनासामानाधिकरण्येनत्सिद्धंनामधेयानांविधेयार्थपरिच्छेदकतयार्थवत्वम् यथाहुः तदधीनत्वा
द्यागविशेषसिद्धेरितिनामधेयत्वंचनिमित्तचतुष्टयात् मत्वर्थलक्षणाभयात् वाक्यभेदभयात् तत्प्रख्यशास्त्रात्तद्व्यपदेशाच्चेति
तत्रोद्भिदायजेतपशुकामइत्यत्रउद्भिच्छब्दस्ययागनामधेयत्वंमत्वर्थलक्षणाभयात् तथाहिउद्भिच्छब्दस्यगुणसमर्पकत्वेयागानुवादे

नतावन्मगुणविधानंयुज्यते फलपदानर्थक्यापत्तेः नचानेन वाक्येन फलंप्रतियागविधानंतस्मिंश्चगुणविधानंयुज्यतेवाक्यभेदापत्तेः।
नापिगुणफलसंबंधविधानंसंभवति परपदार्थविधानेनविप्रकर्षार्थविधानापत्तेःधात्वर्थस्यस्वरूपेणाविधानात् तदुद्देशेनवान्यस्यकस्य
चिद्विधानाद्धातोरत्यंतपारार्थ्यापत्तेश्चयज्यानर्थक्यापत्तेश्च नहितद्गेनेनकरणंसमर्प्यते गुणस्यकरणत्वेनान्वयात् नापिफलंपशोर्भा
व्यत्वेनान्वयात् ॥ अथगुणफलसम्बन्धविधानेयागस्याश्रयत्वेनान्वयइतिचेत् नयजेतेत्यत्रआश्रयत्ववाचकपदाभावात्। अथसि
द्धांतेकरणत्वमिवाश्रयत्वमपिलक्ष्यमितिचेन्न आश्रयत्वापेक्षयाकरणत्वस्यलघुत्वेनतल्लक्षणायाएवयुक्तत्वात् फलायविधीयमा
नोगुणोयत्रकारकेतामापद्यतेसआश्रयः तत्वंचाश्रयत्वंकरणत्वंचनिष्कृष्टाशक्तिरितिलाघवम्। किंचगुणफलसम्बन्धविधानेकरणीभू
तोगुणस्तन्निष्ठंकरणत्वंवाफलोद्देशेनविधेयंतत्राद्यपक्षेकरणत्वस्यगुणोपसर्जनत्वेनप्रतीतिर्लक्षणयैववाच्यातस्यतृतीययाप्रत्य
याथत्वात् प्राधान्येनोपस्थितेः यद्यपिगुणनिष्ठंकरणत्वंफलोद्देशेनविधेयंतदापिफलभावनायांकरणत्वेनान्वययोग्यगुणनिष्ठकरण
त्वोपस्थितिर्लक्षणयैव वाच्यातृतीयाभिहितस्यकरणकारकस्यक्रियान्वययोग्यस्यकरणत्वेनान्वयायोग्यत्वात् करणशब्देनाभिहि
तंहिकरणकारकंतत्वेनान्वययोग्यत्वंनतृतीयाभिहितंकरणशब्दादिवत्तृतीयातस्तृतीयोत्पत्तिप्रसंगात् अतश्चकरणत्वेनान्वय
योग्यगुणनिष्ठंकरणत्वोपस्थितिर्लक्षणयैववाच्यालक्षणयाचोपस्थितकरणत्वस्यकरणीभूतस्यवागुणस्यफलभावनायांयत्कर
णत्वंतदपितल्लक्षणयैववाच्यम्श्रूयमाणयातृतीययागुणमात्रस्ययागंप्रतिकरणत्वाभिधानात् अतएवतंत्ररत्नेचतुर्थेकरणीभू
तगोदोहनादेःपश्वर्थत्वंसमभिव्याहारादित्युक्तम् अतश्चगुणफलसंबंधविधानेधातोरत्यंतपारार्थ्यादिबहुदोषवत्वादुद्भिच्छब्दस्य
गुणसमर्पकत्वेगुणविशिष्टकर्मविधानमेवस्वीकार्य्यम् तथासतिहियजिनालघुभूतंकरणत्वमात्रंलक्ष्यतेउद्भिच्छब्देनचप्रकृत्यर्थे

नमत्वर्थमात्रं लक्ष्यमिति गुणफलसंबंधविधानाल्लाघवं भवति धातोरस्यं न पारार्थ्यादिकं तु न भवत्येव धात्वर्थस्यैव फलोद्देशेन विधानात् अतश्चो
द्भिच्छब्दस्य गुणसमर्पकत्वेन मत्वर्थं लक्षयित्वा गुणविशिष्टकर्मविधानं स्वीकार्यमुद्भिद्वता यागेन पशुं भावयेदिति कर्मनामधेयत्वेन उद्भिच्छब्दस्य न
मत्वर्थलक्षणा मुख्ययैव वृत्त्या यजिसमानाधिकरण्येन तस्यान्वयसंभवात् उद्भिदा यागेन पशुं भावयेदिति संभवति च मुख्येऽर्थे लक्षणाश्रयितुं न
युक्ता सन्निकृष्टविधानं तु समानमेव न चैवं सोमेन यजेतेत्यत्रापि सोमपदस्य यागनामधेयत्वापातो गुणविधित्वे मत्वर्थलक्षणापत्तेरिति वाच्यं
सोमपदस्य लतायां रूढत्वेन यागनामधेयत्वानुपपत्तेरगत्या लक्षणाश्रयणात्। उद्भिच्छब्दस्य तु नैवं वाच्योऽर्थः कश्चित्प्रसिद्धः उद्भिद्यतेऽने
नेति योगस्य तु गुण इव यागेऽपि फलोद्भेदनकारिण्युपपत्तेः नतिसिद्धमुद्भिच्छब्दस्य मत्वर्थलक्षणाभयाद्यागनामधेयत्वमिति चित्रया यजेत पशु
काम इत्यत्र चित्राशब्दस्य वाक्यभेदभयात्कर्मनामधेयत्वम् तथाहि न तावदत्र गुणविशिष्टयागविधानं संभवति दधि मधु पयो घृतं धा
ना उदकं तंडुलास्तत्संसृष्टं प्राजापत्यमित्यनेन विहितत्वाद्यागस्य विशिष्टविधानानुपपत्तेः प्राप्तयागस्य फलसंबंधे गुणसंबंधे च विधीयमा
ने वाक्यभेदः अथ चित्राशब्दात् चित्रत्वस्त्रीत्वयोः प्रतिपत्तेः स्त्रीत्वस्य च स्वभावतः प्राणिधर्मत्वात्प्रकृते दध्यादिद्रव्यके कर्मण्यविनियो
गात् नानेन वाक्येन प्रकृते कर्मणि गुणविधानं किंतु प्राणिद्रव्यके कर्मणि तत्रास्य वाक्यस्यानारभ्याधीतत्वादनारभ्याधीनानां च प्रकृतौ
वाद्विरुक्तत्वादिति न्यायेन प्रकृतिगामित्वात्प्राणिद्रव्यकाणां च यागानां दैक्ष्यस्य चेतरेष्विति न्यायेनाग्नीषोमीयप्रकृतिकत्वात्तदनुवादेनाने
न वाक्येन गुणो विधीयते दैक्ष्यस्य च ज्योतिष्टोमांगत्वेन स्वतंत्रफलाकांक्षाया अभावात्पशुकामपदं न फलसमर्पकं किंतु अग्नीषोमीयप
श्वर्जनागनयाप्राप्तकामनानुवादः तथा च न वाक्यभेद इति चेन्न तथापि दैक्षानुवादेन चित्रत्वस्त्रीत्वविधाने वाक्यभेदात् विशिष्टकारक
विधानेऽपि गौरवलक्षणो वाक्यभेद एककारकस्यापि प्राप्तत्वेन विशिष्टविधानानुपपत्तेश्च कामपदस्यापि स्वरसतः फलपरस्य कामना

नुपादत्वेआनर्थक्यापत्तेश्चनियमतः पश्वर्जनकामनाभवतिकामनातः प्रागेवकेनचिद्दृत्तेपशौतदभावात् तथाचपशुकामपदस्यनित्यवच्छ्रवण
बाधः दैक्षस्योत्पत्तिशिष्टपुंस्त्वावरुद्धत्वेनतत्रस्त्रीत्वविधानानुपपत्तेश्च आमिक्षायागानुवादेनवाजिनविधानवत् कृष्णसारंगोऽग्नीषोमी
यइति विशेषविहितेनस्वसन्निधिपठितेनचकृष्णसारंगवर्णेनावरुद्धे चित्रत्वस्यानारभ्याधीतत्वेनसामान्यशास्त्रेणविधानानुपपत्तेश्च पं
चदश्यावरुद्धइवसाप्तदश्यविधानमथमाभूदग्नीषोमीयपश्वनुवादेनचित्रत्वस्त्रीत्वविधानंसारस्वतीमेषीतिवाक्यविहितयागांगमेष्यनु
वादेनतुगुणविधानंस्यात् चित्रयेतिस्त्रीकारकानुवादेनचित्रत्वमात्रविधानात् नचप्राकृतेनकृष्णसारंगवर्णेननैराकांक्षान्नचित्रत्वविधानं
युक्तमितिवाच्यम्। उपदिष्टेनचित्रत्वेनातिदिष्टस्यवर्णांतरस्यबाधोपपत्तेरितिचेन्नैवं नहिचित्रयेत्येकेनपदेनस्त्रीकारकस्योद्देशः चित्र
त्वस्यचविधानंसंभवति एकप्रसरताभंगलक्षणवाक्यभेदापत्तेः उद्देश्यविधेयभावस्यानेकपदसाध्यत्वात् अतएववैषट्कर्त्तुः प्रथमभक्षइ
त्यत्रविशिष्टभक्षविधिर्नतुभक्षानुवादेनप्राथम्यविधिरित्युक्तं ततोमेष्यनुवादेनचित्रत्वविधानेफलप्रदानर्थक्यापत्तेश्चउभयविधानेवा
क्यभेदात् प्रकृतस्यचयागस्यफलाकांक्षायाअनिवृत्तेः विश्वजिन्न्यायेनफलकल्पनेगौरवंदधिमध्वित्याद्युत्पत्तिवाक्यैनेतस्याधिकारवा
क्यस्यप्रतिपन्नैकवाक्यताबाधेनवाक्यभेदप्रसंगाच्च चित्राशब्दस्यतुकर्मनामधेयत्वेप्रकृतस्यकर्मणः फलाकांक्षस्यफलसंबंधमात्र
करणान्नवाक्यभेदः प्रकृतायाइष्टेरनेकद्रव्यकत्वेनचित्राशब्दस्यतत्रोपपत्तेः तत्सिद्धं वाक्यभेदभयाच्चित्राशब्दः कर्मनामधेयइति।
अग्निहोत्रंजुहोतीत्यत्राग्निहोत्रशब्दस्यकर्मनामधेयत्वंतत्प्रख्यशास्त्रात् तस्यगुणस्यप्रख्यापकस्यशास्त्रस्यविद्यमानत्वेनाग्निहोत्रश
ब्दः कर्मनामधेयइतियावत् तथाहिविधिनातावत्तदेवविधेयंयत्प्रकारान्तरेणाप्राप्तमप्राप्तेशास्त्रमर्थवदितिन्यायात् अग्निहोत्रशब्दस्य
चगुणविधित्वेयोगुणस्तेनविधेयः सशास्त्रांतरेणप्राप्तः कथमितिचेत् शृणु यदितावदग्नौहोत्रमस्मिन्निति सप्तमीसमासमाश्रित्यहोमा

न्या॰मी॰ धारत्वेनाग्निर्विधेयइत्युच्यतेतदायदाहवनीयेजुहोतीत्यनेनैवप्राप्तत्वाद्धिध्यानर्थक्यमथाग्नयेहोत्रमस्मिन्नितिचतुर्थीसमासमाश्रित्याग्निरूपादेवतानेनसम:
२४ र्प्यतेइतितन्नशास्त्रांतरेणाप्राप्तत्वात् किंतच्छास्त्रांतरमितिचेदत्रकेचित् यदग्नयेचप्रजापतयेचसायंजुहोतीतिशास्त्रांतरेणहोमानुवादेनाग्निप्रजापत्योर्विधा
नान्नाग्निहोत्रपदंदेवतासमर्पकंनचोभयविधानेवाक्यभेदः परस्परनिरपेक्षविधानेहिवाक्यभेदःस्यात् अग्नयेजुहोतिप्रजापतयेजुहोतीतिप्रत्येकंविधिव्याप्ता
रात् चशब्दश्रवणात्तुपरस्परसापेक्षस्यैवपदद्वयस्याख्यातान्वयान्नवाक्यभेदः अतएवऋत्विग्भ्योदक्षिणांददातीतिवाक्यविहितदक्षिणानुवादेनगौश्चाश्व
श्चाश्वतरश्चगर्दभश्चाजाश्चावयश्चव्रीहयश्चयवाश्चतिलाश्चमाषाश्चतस्यद्वादशशतंदक्षिणेतिवाक्येनगवादीनांविधानंदशमोक्तंसंगच्छतेपरस्परसापे
क्षाणांगवादीनांविधानेनवाक्यभेदाभावात् अन्यथादक्षिणानुवादेनानेकेषांगवादीनांविधानंनैवंसंगच्छेतेति अग्निप्रजापत्योश्चदेवतयोःसतोःसमुच्चयोन
तुसमुच्चितयोर्देवतात्वंपृथक्कारकविभक्तिश्रवणात् चकारार्थस्यचकारकार्थेनान्वयात् तस्याप्राधान्यात् अतश्चनाग्नीषोमादिवद्द्वि
प्रजापत्योर्देवतात्वमिति अन्येत्वाचार्याआहुः अग्नयेचप्रजापतयेचसायंजुहोतीतिवाक्यंनाग्नेःप्रापकंहोमानुवादेनप्रजापतिविधाना
त् नचविनिगमनाविरहादुभयविधानंयुक्तमितिवाच्यम् विधिनाहितदेवविधीयतेयत्प्रकारान्तरेणाप्राप्तंतत्रप्रस्थानेनवाक्येनसायं
कालोनविधीयतेसायंजुहोतीतिवचनांतरेणप्राप्तत्वात् तथाग्निरपिनविधीयतेऽग्निर्ज्योतिर्ज्योतिरग्निःस्वाहेतिमंत्रवर्णाद्देवताप्राप्त
त्वात् मंत्रवर्णस्यापिदेवतासमर्पकत्वमस्त्येव अतएवोपांशुयाजेविष्ण्वादीनांमांत्रवर्णिकंदेवतात्वमित्युक्तम् नन्वेवंप्रजापतिदेवत
याअग्नेर्बाधःस्यात् चतुर्थ्याहिप्रजापतेर्देवतात्वमवगम्यते अग्नेस्तुमांत्रवर्णिकंतत्रसास्यदेवतेतिदेवतात्वेनतद्धितस्मरणवद्यद्यपिदे
वतात्वेचतुर्थीस्मरणंनास्तिसंप्रदानेचतुर्थीतिसंप्रदानेतस्याःस्मरणात् तथापित्यज्यमानद्रव्योद्देश्यत्वलक्षणदेवतात्वंतच्चसंप्रदानस्व राम
रूपांतर्गतंत्यज्यमानद्रव्योद्देश्यत्वेसतिप्रतिगृहीतृत्वस्यसंप्रदानत्वात् अतश्चतुर्थीतःसंप्रदानैकदेशतयादेवतात्वप्रतीतिरस्त्येवमं २५

त्रवर्णात्तु न देवतात्वं प्रतीयते किंत्वधिष्टानमात्रं अतश्च मंत्रवर्णश्चतुर्थीतो दुर्बलः यथाहुः तद्धितेन चतुर्थ्या वा मंत्रवर्णेन वा पुनः देवतायाः वि
धिस्तत्र दुर्बलं तु परं परमिति अतश्च प्रबलप्रमाणबोधितप्रजापतिदेवतया दुर्बलप्रमाणबाधिनाग्नेर्बाधः स्यादिति चेत्सत्यं स्याद्यद्यग्नये च प्रजा
पतये च जुहोतीति केवलं प्रजापतिविधानं स्यात् विधीयमानस्तु प्रजापतिर्मंत्रवर्णप्राप्तमग्निमनूद्य तत्समुच्चितो होमोद्देशेन विधीयते समु
च्चितोभयविधानापेक्षया न्यतःप्राप्तमग्निमनूद्य तत्समुच्चितप्रजापतिमात्रविधाने लाघवात् अतश्च न बाधकत्वं निरपेक्षविधानाभावात् य
था च त्वग्ने च ते ग्निप्रजापत्योरेक होमोद्देशेन विधानात्तुल्यार्थत्वेन विकल्पे प्रसक्ते प्रजापतेर्न पाक्षिकमग्निबाधकत्वं समुच्चयविधानात् एवं
मंत्रवर्णप्राप्तमग्निमनूद्य तत्समुच्चितप्रजापतिविधानेपि न बाधकत्वमिति तुल्यं यत्त्वग्नेर्मांत्रवर्णिकत्वेग्निर्ज्योति ज्योतिः सूर्यः स्वाहेति मिश्र
लिंगमंत्रवर्णबलात्सायं होमस्य हि देवस्य त्वा पतिरिति तत्राग्निसमुच्चितप्रजापतिविधानवत्सूर्यसमुच्चितस्याविधानात्प्रबलप्रमाणबो
धितेन प्रजापतिना मंत्रवर्णप्राप्तस्य सूर्यस्य बाधितत्वात् यत्तु प्रमांत्रवर्णिकत्वे प्रजापतिविधेरेकेनैव वाक्येन सिद्धेरग्नये च प्रजापतये च
सायं जुहोति यत्सूर्याय च प्रजापतये च प्रातर्जुहोतीति वाक्यद्वयं व्यर्थं भवति तत्र भवेद्व्यर्थं यदि प्रजापतिमात्रविधानं विवक्षितं स्यात् सायंहोमे
ग्निसमुच्चितप्रजापतिविधानं प्रातर्होमे सूर्योज्योतिर्ज्योतिः सूर्यः स्वाहेति मांत्रवर्णप्राप्तसूर्यसमुच्चितप्रजापतिविधानं च विवक्षितं न चैत
देकेन वाक्येन सिध्यति अतोर्थवद्वाक्यद्वयम् यत्त्वग्ने मांत्रवार्णिकत्वे मंत्रवर्णस्याग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोतीति वाक्येन सा
यं होमे विनियुक्तत्वात् तत्प्रकाश्यस्याग्नेरपि प्रजापतिसमुच्चितस्य तत्रैव देवतात्वावगतेर्यदग्नये चेति वाक्ये सायंशब्दो व्यर्थ इति एवं य
त्सूर्याय चेति वाक्ये प्रातःशब्दो व्यर्थ इति किंच मंत्रवर्णेन ज्योतिष्ट्वगुणविशिष्टस्याग्नेः प्रकाशनाद्धि शिष्टस्यैव देवतात्वापात इति तदपि न
होमानुवादेन देवताद्वयविधानेपि मंत्रवर्णयोर्लिंगाद्देवप्राप्तिसंभवात्तद्धि ध्यानर्थक्यात् मिश्रलिंगमंत्रविधिपर्युदस्तयोः प्रतिप्रसवार्थं

विधानेपि तद्धिधिगनयोः सायंप्रातःशब्दयोरानर्थक्यं विधीयमानयोर्मंत्रयोर्व्यवस्थयैव प्राप्तिसंभवात् तत्प्रकाश्ययोर्देवतयोर्व्यवस्थितत्वा
त् अनुवादत्वोक्तिस्तूभयत्र तुल्येति सांववर्णिकत्वेपि अग्नेः केवलस्यैव देवतात्वं न गुणविशिष्टस्य यदग्नये चेति वाक्ये ऽग्नेः पूर्वाहुतिरित्य
त्र केवलस्यैवाग्नेः संकीर्त्तिनात्केवलस्यैव देवतात्वावगतेः यथोपांशुयाजे विष्णवादिमांत्रवर्णिकत्वेपि न गुणविशिष्टस्य देवतात्वं विष्णुरु
पांशु यष्टव्य इत्यर्थवादे केवलस्यैव संकीर्त्तनान्न हृदिति अतश्च मांत्रवर्णिकत्वे दोषाभावाद्देवताद्वयविधानं च गौरवापत्तेरन्यतः प्राप्तमनू
द्य तत्समुच्चितः प्रजापतिरेवात्र विधीयते होमानुवादेनोभयविधाने वाक्यभेदप्रसंगाच्च न च चकारश्रवणान्न वाक्यभेद इति वाच्यम् च
कारार्थो हि समुच्चयः तं च समुच्चयम् यदि चकारः प्राधान्येन ब्रूयात्तदा प्रधानस्यानेकविशेषणसंग्राहकत्वादारुण्यादिविशिष्टक्रयविधा
नइव कारकद्वयसमुच्चयविधाने वाक्यभेदो न भवेत् न च चकारः समुच्चयं प्राधान्येन ब्रूते परोपसर्जनत्वेनैवाभिधानात् अत एव दशमेभा
ष्यकारैश्चकारस्य समुच्चयशब्दाद्वैलक्षण्यं प्रतिपादितं समुच्चयशब्दो हि तं प्राधान्येन ब्रूते न च चकारः यदि हि प्राधान्येन ब्रूयात्तदा तत्प्र
तिपन्नः समुच्चयः क्रियागुणैः संबध्येत समुच्चयः शोभनः समुच्चयो द्रष्टव्य इति वच्च शोभनश्च द्रष्टव्य इति प्रयोगः स्यात् समुच्चयशब्दव
च्चकारस्य प्राधान्येन समुच्चयवाचित्वे धवखदिरयोः समुच्चय इति वद्धवखदिरयोश्चेत्यपि प्रयोगः स्यादिति अतश्चकारः समुच्चयं प्रा
धान्येन न ब्रूते येन प्रधानस्यैकस्य विधानान्न वाक्यभेदो भवेत् किंतु कारकद्वयोपसर्जनत्वेनैव स तं ब्रूते समुच्चितो अग्निप्रजापति इति प्रधा
नद्वयविधाने वाक्यभेदः स्यादेव यथा ग्रहोद्देशेन संमार्गकत्वविधाने यद्यपि चकारः समुच्चयं प्राधान्येन ब्रूयात्तथापि तस्य कारकद्वयं प्रतिप्रा
धान्यमनुपपन्नं विभक्त्याभिहितस्य कारकद्वयस्य क्रियोपसर्जनत्वेन समुच्चयोपसर्जनत्वाभावात् कृदंतादिशब्दैरुपस्थितं हि कारकं
क्रियातोन्येन संबध्यते कारकसमुच्चयः करणसमुच्चय इति विभक्त्याभिहितं तु क्रिययैव कारकाणां तयैवान्वयात् अतश्चकारेणोच्य

मानः सः कारकोपसर्जनत्वेनैवोच्येत कारकद्वयं च प्रधानमेकोद्देशेन च प्रधानद्वयविधाने वाक्यभेद एव यथाहुः अनेकपदसंबद्धं यद्येकमपिका
रकं तथापि तदनावृत्तेः प्रत्ययेन न विधीयत इति यच्च यथा दक्षिणानुवादेन गवादीनामनेकेषां विधानेन वाक्यभेदस्तथा कारकद्वयविधानेपीति
तन्न नहि गौश्चाश्वश्चेत्यस्मिन् वाक्ये दक्षिणानुवादेन गवादयो विधीयंते उक्तरीत्या वाक्यभेदापत्तेः चकारश्रवणेन कथंचित्परिहारेपि ग
वादीनामनेकेषां द्वादशशतसंख्यायाश्च विधाने वाक्यभेद एवाध्वर्यवशाखायां गौश्चेत्यादेः तस्य द्वादशशतमित्यं तस्य सहस्रतत्वेन
चास्यैकवाक्यत्वमित्युक्तं दशमे अतोनेन वाक्येनोभयविशिष्टदक्षिणैव विधीयते विशिष्टविधानाच्च न वाक्यभेदः अत एव पार्थसारथि
मिश्रैर्दशमे तत्र तत्र सोभयविशिष्टा विधीयते अनेकगवाद्यात्मिकैकादक्षिणापि धीयत इति चोक्तम् न चैवं ऋत्विग्भ्यो दक्षिणां द
दातीत्यस्यानर्थक्यं तस्यानुवादत्वात् ऋत्विक्संबंधपरत्वादादक्षिणाशब्दसामर्थ्याद्धि ऋत्विजां चमसाध्वर्यवादीनां च तत्संबंधः स्या
त्स तद्वाक्यसत्वे च न भवति ऋत्विक्शब्दब्रह्मादिगतत्वं तु गतप्रजनननिमित्तत्वेन च चमसाध्वर्यूणामृत्विक्त्वाभावस्य तृतीये उक्तत्वा
त् अतश्च गौश्चाश्वश्चेत्यस्मिन् वाक्ये विशिष्टविधानान्न वाक्यभेदः यदग्नये च प्रजापतये च सायं जुहोतीति तु न विशिष्टविधानं होम
स्याग्निहोत्रं जुहोतीत्यनेन प्राप्तत्वात् अतश्च होमानुवादेन समुच्चितोभयविधाने वाक्यभेदापत्तेः पौरवापत्तेश्च नानेन वाक्येन देवताद्वयं वि
धीयते किन्तु मंत्रवर्णप्राप्तमग्निमनूद्य तत्समुच्चितः प्रजापतिर्होमोद्देशेन विधीयते अतश्चानेन दमग्नेः प्रापकं किंतु मंत्रवर्ण एव अतश्चानेना
ग्नेः प्राप्तत्वान्नाग्निहोत्रपदं देवतासमर्पकं किं तर्हि नामधेयमेव॥ तत्सिद्धमेतत्तत्प्रख्यशास्त्रादग्निहोत्रशब्दस्य कर्मनामधेयत्वमिति॥
एवं प्रयाजेष्वपि समिदादिदेवतानां समिधः समिधोग्न आज्यस्य व्यंत्वित्यादिमंत्रवर्णेभ्यः प्राप्तत्वात्समिधो यजतीत्यादिषु समिदादिशब्दा
स्तत्प्रख्यशास्त्रात्कर्मनामधेयम् यथाहुः विधित्सितगुणप्रापि शास्त्रमन्यद्यतस्त्विह तस्मात्तत्प्रापणं व्यर्थमिति नामत्वमिष्यतइति दिक्॥

श्येनेनाभिचरन्यजेतेत्यत्र श्येनशब्दस्य कर्मनामधेयत्वं तद्व्यपदेशान्तेन व्यपदेशः उपमानं तदन्यथानुपपत्त्येति यावत् तथाहि यदि
धेयं तस्य स्तुतिर्भवति न यदि अत्र श्येनो विधेयः स्यात्तदार्थवादे तस्यैव स्तुतिः कार्या न च यथा वै श्येनो निपत्यादत्त इत्यनेनोक्तत्येनार्थवा
देन श्येनं स्तोतुं शक्यः श्येनोपमानेनार्थान्तरस्तुतेः क्रियमाणत्वात् न च श्येनोपमानेन तस्यैव स्तुतिः कर्तुं शक्यते उपमानोपमेयभा
वस्य भिन्ननिष्ठत्वात् यदा तु श्येनसंज्ञको यागो विधीयते तदा अर्थवादेन श्येनोपमानेन तस्य स्तुतिः कर्तुं शक्यते श्येनशब्दस्य तद्
व्यपदेशान्नामधेयत्वम् तत्सिद्धं निमित्तचतुष्टयान्नामधेयं उत्पत्ति शिष्टगुणवलीयस्त्वमपि पंचकं केचिन्नामधेयत्वे निमित्त
माहुः वैश्वदेवेन यजेतेत्यत्र वैश्वदेवशब्दस्य कर्मनामधेयत्वमुत्पत्तिशिष्टगुणवलीयस्त्वात् उक्तमत्वर्थलक्षणादिप्रकारचतुष्टया
संभवात् तथाहि न तावन्मत्वर्थलक्षणाभयान्नामधेयत्वं वक्तुं शक्यं वैश्वदेवेनेति न हि तेनैव मत्वर्थस्य यागस्योक्तत्वात् सास्य देवते
त्यस्मिन्नर्थे हि तद्धितस्मरणं तत्रास्य शब्दस्य तद्धितान्तर्गतस्य यद्यपि सूक्तहविषोरितिस्मृतेः सूक्ते हविषि वा मुख्यत्वमवगतं तथा
पि सर्वनाम्नामुपस्थितवाचित्वात् सूक्तहविषोश्चात्रानुपस्थितत्वात् यजेतेत्युपस्थितं यागमेवास्य शब्दोभिधत्त इति न यागे मत्वर्थ
लक्षणा विश्वेदेवरूपैव देवताविधानाच्च न वाक्यभेदः नापि तत्प्रख्यशास्त्रान्नामत्वं यत्र हि विधित्सितो गुणोन्यतः प्राप्तः तत्र तत्प्र
ख्यशास्त्रान्नामधेयत्वम् यथाग्निहोत्रशब्देन अत्र चाग्नेयादयोऽष्टौ यागाः प्रकृताः तत्रामिक्षायागे यद्यपि विश्वेदेवाः प्राप्ताः वै
श्वदेव्यामिक्षेति तथापि सर्वेषु तेषामप्राप्तत्वाद्वैश्वदेवेन यजेतेत्यनेन तत्र तद्विधानेन तत्प्रख्यशास्त्रमन्यत् येन तद्वशान्नामत्वं स्यात् न चा
मिक्षायागस्यैवैतन्नामेति वाच्यं वैश्वदेवेन यजेतेति वाक्यवैयर्थ्यापत्तेः वैश्वदेवशब्दस्यामिक्षायागमात्रनामत्वे स एव यागोऽने
नानूद्यत इति वाच्यम् न च तदनुवादे नास्ति किंचित्कृत्यं प्राचीनप्रवणे वैश्वदेवेन यजेतेति विधीयमानस्य प्राचीनप्रवणदेशस्य विना

प्येत द्वाक्यं आमिक्षायागस्य संबंधोपपत्तेः विश्वेदेवसंबंधात्तस्याग्नेयाद्यशेषप्रकृतयागनामत्वे तु न वैश्वदेवेन यजेतेति वाक्यानर्थक्यं तदास्यनेः
नाष्टौ यागाः अनूद्यंते अनुवादेन चैकप्रतीत्यारूढत्वात्समुदितानामष्टानामपि वैश्वदेवशब्दो नामधेयं सिध्यति एवं प्राचीनप्रवणे वैश्वदेवेन यजे
तेत्यत्र वैश्वदेवशब्देनाष्टौ यागाननूद्य प्राचीनप्रवणविधाने तत्र सिद्धं भवति तद्वाक्यस्यासत्वेऽनेन वाक्येनामिक्षायाग एव प्राचीनप्रवणदेशसं
बंधः स्यात् अतश्चाष्टसु यागेषु प्राचीनप्रवणदेशसंबंधस्तैतद्वाक्यप्रयोजनम् एवं च वैश्वदेवशब्दोऽष्टानां नामधेयं नच तत्र तत्प्रख्यशास्त्र
निमित्तं भवति स तस्य विश्वेदेवाप्राप्तेः अतो न वैश्वदेवशब्दस्य तत्प्रख्यशास्त्रान्नामधेयत्वमिति नापि तद्व्यपदेशात् तादृशस्य व्यपदेशस्या
नुपलंभात् अतश्च वैश्वदेवशब्दस्य नामधेयत्वे उक्तप्रकारचतुष्टयस्यानिमित्तत्वादुत्पत्तिशिष्टगुणबलीयस्त्वमेव निमित्तं तथाहि वैश्वदेवे
यजेतेत्यत्र न तावद् प्रकृतकर्मानुवादेन देवताविधानं संभवति तेषामत्रानुपस्थितेः नापि देवताविशिष्टकर्मांतरविधानं संभवति गौरवापत्तेः
अष्टौ हवींषीत्यनन्व[illegible]ति कलिंगविरोधात् अतोनेन वाक्येन प्रकृतकर्मानुवादेन देवता विधीयत इति वक्तव्यं तत्रामिक्षायागे विश्वेदेवप्राप्तेः स
प्तसु यागेष्वनेन वाक्येन विश्वेदेवा विधीयंत इति वक्तव्यम् नच तत्संभवति तेषामुत्पत्तिशिष्टाग्न्याद्यवरोधात् आकांक्षया हि संबंधी भवति
आग्नेयादियागानां हि देवताकांक्षा उत्पत्तिशिष्टैरग्न्यादिभिरेव निवृत्तेति न तत्र विश्वेदेवविधानं युक्तम् अतश्चोत्पत्तिशिष्टगुणबलीयस्त्वाद्वै
श्वदेवशब्दस्य कर्मनामधेयत्वमिति यथाऽऽहुः गुणान्तरावरुद्धत्वान्नावकाशो गुणोपरः विकल्पोपि न वैषम्यात्तस्मान्नामैव युज्यत इति अ
न्ये त्वाचार्या आहुः यः शब्दो यत्र कर्मणि यद्गुणसंबंधं बोधयति स चेत्संबंधः शास्त्रांतरप्रतिपन्नः तदा तस्य शब्दस्य तन्नामधेयत्वं तत्प्रख्यशास्त्रात्
न च शास्त्रांतरं विधिर्वार्थवादो वेत्यन्यदेतत् यत्र नादरः तत्राग्निहोत्रशब्देऽग्निसंबंधबोधकं शास्त्रांतरं विधिरेव वैश्वदेवशब्दश्च विश्वेदेवसंबं
धं कर्मणि बोधयति विश्वेदेवसंबंधश्चाष्टसु यागेषु यद्विश्वेदेवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वमित्यर्थवादादवगतः नच विधिरेव तत्प्रख्य

शास्त्रं नार्थवाद इत्यत्र किंचित्प्रमाणमस्ति अत एव ज्योतिष्टोमेव स्वर्गकामो यजेतेत्यत्र ज्योतिष्टोमशब्दस्तानि वा एतानि ज्योतींषि य एतस्य स्तोमा
इत्यर्थवादावगतं ज्योतिःसंबंधनिमित्तीकृत्य सोमयागे प्रवर्तमानस्तत्प्रख्यशास्त्रान्नामधेयं भवति एवं प्रकृतेपि द्रष्टव्यं पंचमप्रकारकल्पने प्रमा
णाभावात् अत एव वैश्वदेवाधिकरणे वार्त्तिककारैरेवमुपसंहृतं न तत्प्रख्यतयैव सर्वेषां नामधेयत्वमिति यच्चोत्पत्तिशिष्टगुणबलीयस्त्वमु
क्तं तद्गुणविध्यभावे युक्त्यभ्युच्चयमात्रं तत् सिद्धं तत्प्रख्यशास्त्राद्वैश्वदेवशब्दस्य कर्मनामधेयमिति ननु पशुसोमाधिकरणे ऐंद्रवायवं गृ
ण्हातीत्यादौ न यजिकल्पनं सोमेन यजेतेति प्रत्यक्षयजिश्रुतेरित्युक्तं तेन न्यायेन वैश्वदेव्यामिक्षेत्यत्रापि यजिकल्पनं मास्तु वैश्वदेवेन यजेते
त्यत्र प्रत्यक्षयजिश्रुतेः एवं चानेन वाक्येन देवताविशिष्टकर्मविधानमस्तु तस्य च द्रव्याकांक्षायां वैश्वदेव्यामिक्षेति द्रव्यविधानमस्तु एवं च
न वाक्यद्वयस्याप्यनुवादत्वं नाप्यष्टौ हवींषीत्यनन्यगतिकलिंगविरोधो भवेदिति चेन्नैवं वैश्वदेव्यामिक्षेत्यत्र यज्यकल्पने आमिक्षा किमनु
वादेन विधीयत इति वक्तव्यम् विश्वेदेवानुवादेन विधाने द्रव्यस्य देवतांगत्वमेव स्यात् न यागांगत्वम् किंच वैश्वदेवीशब्दो देवतातद्धितत्वादा
मिक्षांतर्गतत्वेन तत्र विश्वेदेवानुवादेन द्रव्यविधानं वैश्वदेवीशब्देनैव कर्त्तव्यं पदश्रुतेः यथा भावनायां करणसमर्पणं धातुनैव क्रियते पदश्रु
तेः न तूपपदेनेत्युक्तं भावार्थाधिकरणे तद्वत् तत्र च वषट्कर्त्तुः प्रथमभक्ष इतिवदेकप्रसरताविरोधः तो यागानुवादेनापि द्रव्यविधानार्थं वै
श्वदेव्यामिक्षेत्यत्र यजिकल्पनं तावदवश्यं कर्त्तव्यम् अतश्च पशुसोमाधिकरणन्याये वैषम्यम् ऐंद्रवायवं गृण्हातीत्यत्र देवताविशिष्टग्रहण
विधानेन यज्यकल्पनात् यजिकल्पने वैश्वदेव्यामिक्षेत्यत्रैव द्रव्यदेवताविशिष्टकर्मविधानं युक्तं रूपद्वयश्रवणात् एवं चाग्नेयोष्टाकपालः
सौम्यश्चरुरित्यादिवाक्यैर्वैश्वदेव्यामिक्षेत्यस्य वाक्यस्य भायपाठो रक्षितो भवति अन्यथा हि तेषु सर्वेषु द्रव्यदेवतासंबंधकल्पितयाग
विधानमत्र च द्रव्यमात्रविधानमिति वैरूप्यं प्रसज्येत किंच वैश्वदेवेन यजेतेत्यत्र वैश्वदेवस्य देवतासमर्पकत्वे यद्विश्वेदेवाः समयजंत तद्वै

श्वदेवस्य वैश्वदेवत्वमिति तस्यार्थवादस्यात्यंतमेव निरालंबत्वं स्यात् यतस्तदर्थवादाद्धि वैश्वदेवशब्दो विश्वेदेवकर्तृकत्वेन कर्मणि प्रवृत्त इ
तिज्ञायते तद्देवतासमर्पकत्वेन विरुध्यते किंतु वैश्वदेवेन यजेतेत्यस्य यागविधित्वे आमिक्षाया नोत्पत्तिशिष्टत्वं तथा च तया न वाजिनं बाधितुं
शक्यत इति उभयोरपि आमिक्षावाजिनयोर्यागांगत्वं स्यात् तथा च विकल्पः स चाष्टदोष इति तस्माद्वैश्वदेव्यामिक्षेत्यत्रैव यागविधानम् इ
तरस्य त्वनुवादत्वम् अनुवादत्वे च पदानामानर्थक्यं तथोक्तमित्यास्तां तावत् तत्सिद्धं वैश्वदेवशब्दस्य कर्मनामधेयत्वम् तदेवं निरूपितं मत्व
र्थलक्षणादिप्रकारचतुष्टयनिरूपणेन नामधेयस्य विधेयार्थपरिच्छेदकत्वेनार्थवत्त्वम् अनर्थहेतुकर्मणः सकाशात्पुरुषस्य निवृत्तिकरत्वे
न निषेधानां पुरुषार्थानुबन्धित्वम् तथा हि यथा विधयः प्रेरणामभिदधतः स्वप्रवर्तकत्वनिर्वाहार्थम् विधेयस्य यागादेः श्रेयःसाधनत्वमा
क्षिपन्तः पुरुषं तत्र प्रवर्तयन्ति एवं न कलंजं भक्षयेदित्यादयो निषेधा अपि निवर्तनामभिदधतः स्वनिवर्तकत्वनिर्वाहार्थं निषेध्यस्य कलंज
भक्षणादेः अनर्थहेतुत्वमाक्षिपन्तः पुरुषं ततो निवर्तयन्ति ननु कथं निषेधानां निवर्तनाप्रतिपादकत्वं यावता न भक्षयेन्न हंतव्य इत्येवमादा
वव्यवधानेन नञर्थस्याभावस्य धात्वर्थेनान्वये धात्वर्थवर्जनकर्तव्यतैव सर्वत्र वाक्यार्थः प्रतीयते तत्र यथा यजेतेत्यादौ यागकर्तव्यतावा
क्यार्थः एवं निषेधेषु तत्तद्धात्वर्थवर्जनकर्तव्यता वाक्यार्थो न निवर्तनेति चेन्नैवम्। अव्यवधानेपि धात्वर्थस्य प्रत्ययार्थोपसर्जनत्वेनोपस्थि
तस्य नञर्थेनान्वयायोगात् नह्यन्योपसर्जनमन्येनान्वेति मा भूद्राजपुरुषमानयेत्यत्र राज्ञ आनयनान्वयित्वं तद्वद्व्यवधानेपि नञर्थस्य न
धात्वर्थेनान्वयः आरुण्यस्येवैकहायन्या नापि कलंजादिपदार्थैरन्वयः तेषामपि कारकोपसर्जनतयोपस्थितत्वेन भिन्नपदस्य नञोर्थेनान्व
यायोगात् एकहायन्या इवारुण्येनात एवान्येनान्वयायोगान्नञर्थः प्रत्ययार्थेन संबध्यते तस्य प्राधान्यात् क्रयभावनयेवारुण्यादीनि न
त्रापि नाख्यातांशवाच्ययार्थभावनया तस्या अपि लिङ्त्वांशवाच्यप्रवर्तनोपसर्जनत्वेनोपस्थितत्वात् अतो लिङ्त्वांशेन नञ् संबध्यते त

स्यसर्वापेक्षयाप्राधान्यात् नञश्चैषस्वभावोयत्स्वसंबंधिप्रतिपक्षबोधकत्वंनास्तीत्यत्रह्यस्तीतिसत्त्वशब्देनसंबंध्यमानोनञ् सत्त्वप्रतिपक्ष
मसत्त्वंगमयतितदिहलिङर्थस्तावत्प्रवर्त्तनाः सतेनसंबध्यमानोनञ्प्रवर्तनाप्रतिपक्षांनिवर्तनांगमयतिविधिवाक्यश्रवणेःयंमांप्रवर्त्तयनी
तिप्रवर्तनाप्रतीतिवन्निषेधवाक्यश्रवणेःयंमांनिवर्तयतीतिनिवृत्त्यनुकूलव्यापारनिवर्त्तनायाः प्रतीतेः अतश्चसर्वत्रनिषेधेषुनिवर्तनैव
वाक्यार्थः एवंचविधिनिषेधयोर्भिन्नार्थत्वंसिद्धंभवतिहननादिवर्जनकर्त्तव्यतावाक्यार्थपक्षेतुकर्त्तव्यतायाउभयत्रप्रतिपाद्यत्वात्त
योरेकार्थत्वंस्यात् तच्चनयुक्तं यथाहुः अंतरंयादृशंलोकेब्रह्महत्याश्वमेधयोः दृश्यतेतादृगेवेदंविधानप्रतिषेधयोरिति तथाफलबुद्धि
प्रमेयाधिकारिबोधकभेदतः पंचधात्यंतभिन्नत्वाद्भिदोविधिनिषेधयोरिति यन्मते इष्टसाधनत्वंलिङर्थस्तन्मते लिङ्संसृष्टोनञ् इष्टसा
धनत्वप्रतिपक्षमनिष्टसाधनत्वंगमयति सर्वथापितुनञः प्राधान्यात्प्रत्ययेनान्वयः यदातु तदन्वये किंचिद्बाधकं तदागत्याधात्वर्थेनान्वयः
तच्चबाधकंद्विविधं तस्यव्रतमित्युपक्रमोविकल्पप्रसक्तिश्चानेनबाधकद्वयेन नञुक्तेषुवाक्येषुपर्युदासाश्रयणंभवति तदभावेनिषे
धएवपर्युदासः सविज्ञेयो यत्रोत्तरपदेननञ् प्रतिषेधस्सविज्ञेयः क्रिययासह यत्रनञितिचनपोर्लक्षणं तत्रनेक्षेतोद्यंतमादित्यमि
त्यादौपर्युदासाश्रयणंतस्यव्रतमित्युपक्रमात् तथाहिव्रतशब्देनकर्त्तव्योर्थः उच्यते अतश्चस्नातकस्यकर्तव्यार्थानांवक्तव्यत्वेनोप
क्रमात् किंतत्कर्तव्यमित्यपेक्षायामनेन नेक्षेतोद्यंतमित्यादौ कर्तव्यएवार्थोवक्तव्यः आकांक्षिताभिधानात् अर्थांतरोक्तौचपूर्ववाक्यस्य
साकांक्षत्वेनाप्रामाण्यंस्यात् नहिकर्तव्यार्थस्यवक्तव्यत्वेनोपक्रमेऽनेनचतदनभिधानेपूर्ववाक्यस्यनिराकांक्षत्वंसंभवति नचसाकांक्ष
स्याप्रामाण्यंगौरश्वःपुरुषइत्यादावपिप्रसंगात् किंचनेक्षेतेत्यस्योपक्रमेणाप्रतीयमानाएकवाक्यताचनस्यात् अर्थान्तरोक्तेः अतश्चा
स्मिन्वाक्येकश्चित्कर्त्तव्यएवार्थोवक्तव्यस्तदुक्तौचननञः प्रत्ययेनसंबंधोघटतेतत्संबंधेकर्त्तव्यार्थोक्तेरनुपपत्तेःप्रत्ययाच्चावता।

रितोनञ् धातुनासंबध्यते नत्संबंधे चननञः प्रतिषेधकत्वंविधायकसंबंधे नैवतस्यप्रतिषेधकत्वात् प्रतिषेधकत्वस्यविधायकप्रतिपक्षत्वात्
नामधातुयोगेतु ननञः प्रतिषेधकत्वंतयोरभिधायकत्वात् यथाहुः नामधात्वर्थयोगीतु नैवनञ् प्रतिषेधकः वदत्यब्राह्मणाधर्माविन्यमा
त्रविरोधिनाविति अतश्च नेक्षेतेत्यत्रनञो धातुयोगान्नञीक्षतिभ्यामीक्षणविरोधिकश्चनार्थः प्रतिपाद्यते ननुतदन्यत्त्वहि रूढत्वतद्भावे
षु नञितिसत्यपिस्मरणेनञः स्वसंसृष्टाभावशक्तिः लाघवात् नतदन्यतहिरूढत्वयोस्तयोरभावघटितत्वेन गौरवात् अनेकार्थत्वस्य
चान्याय्यत्वात् अतोनञोधातुयोगेधात्वर्थाभावबोधकत्वमेव ननहि रूढार्थबोधकत्वमितिचेत्सत्यं नञोऽभावएवशक्तिः स्मरणंतुप्रती
त्यभिप्रायंनशक्त्यभिप्रायंतथापिनेक्षेतेत्यत्रनप्रत्ययस्यनञः संबंधात्तेनतावत्कश्चिदर्थोविधेयंतत्रनतावद्धात्वर्थोविधातुंशक्यतेनज्ञात
द्भावबोधनात् नापितद्भावोविधातुंशक्यतेऽभावस्याविधेयत्वात् अतश्चनञीक्षतिभ्यांविधानयोग्यः कश्चनेक्षणविरोधीअर्थोलक्षणा
याप्रतिपाद्यतेसचेक्षणविरोधीलक्ष्यमाणः पदार्थोनेक्षेत्यनीक्षणसंकल्पः तस्येक्षणविरोधित्वात्सत्यपिपदार्थान्तरस्येक्षणविधित्वेसर्वक्रि
याविनाभूतत्वेनसंकल्पस्यैवलक्षणात्सएवनेक्षेतेत्यत्रकर्त्तव्यतयाविधीयते अनीक्षणसंकल्पेनभावयेदिति भाव्याकांक्षायांचएतावता
हैनसाविमुक्तोभवतीतिवाक्यशेषावगतः पाप्मक्षयोभाव्यतयासंबध्यते एवंचात्रपापक्षयार्थसंकल्पस्यकर्त्तव्यतयाविधानात्तस्यव्रतमित्य
नेनैकवाक्यतासिध्यति नत्सिद्धं नेक्षेतेत्यत्रतस्यव्रतमित्युपक्रमात्पर्युदासाश्रयणमितिनानुयाजेषुयेयजामहंकरोतीत्यत्रविकल्पप्रस
क्त्यातदाश्रयणं नथाहि यद्यत्रप्रधानसंबंधलोभान्नञः प्रत्ययसंबंधः स्वीक्रियेतनतथासत्यनेनवाक्येनानुयाजेषुयेयजामहः प्रतिषिध्य
तेइतिवक्तव्यमनुयाजेषुयेयजामहंनकुर्यादितिनचतत्रतस्यप्रतिषेधः प्राप्तिंविनासंभवतिप्राप्तिसापेक्षत्वात्प्रतिषेधस्यातएवनांतरिक्षेन
दिवीत्यस्यनप्रतिषेधकत्वमन्तरिक्षेचयनाप्राप्तेः अतएवनब्राह्मणोहंतव्यइत्यस्यनित्यवद्धननिवर्तकत्वमुपपद्यते सर्वोहिपुरुषः कदा

न्या·मी चिद्धननादौ प्रवर्तते तत्र यदि निषेधस्य प्राप्तिसापेक्षत्वं न स्यात्तदा रागादितिरोधाय हननादावप्रवृत्तं प्रत्येव शास्त्रप्रामाण्योपपत्तौ रागादिना
२९ हननादौ प्रवृत्तेन पुंसा न ततो निवर्तितव्यं प्राप्तिसापेक्षत्वे तु स्वयमप्रवृत्तं प्रति प्रसक्त्यभावेन निषेधशास्त्राप्रवृत्तेः रागादिना प्रवृत्तं प्रत्येकस्यां
तिनिमित्तरागबाधेन निषेधशास्त्रप्रवृत्तेर्युक्ता प्रवृत्तस्य ततो निवृत्तिः अतश्च ब्राह्मणो न हन्तव्य इत्यस्य निषेधस्य निवृत्तिनियमबोधकत्वं
व्रीहीनवहन्यादित्यस्येवावघातनियमबोधकत्वं यथा खलु व्रीहीनवहन्यादितिशास्त्रं वैतुष्यार्थमवघाते स्वतः प्रवृत्तं पुरुषं प्रति न प्रव
र्तते वैयर्थ्यात् किं तु दलनादौ प्रवृत्तं प्रति एवं न हन्यादितिशास्त्रं हननात्स्वयं निवृत्तं पुरुषं प्रति न प्रवर्तते वैयर्थ्यात् किं तु हनने प्रवृत्तं पुरुषं
प्रति कर्तव्यत्वेन प्रसक्तस्य निषेधात्कर्तव्यं तन्नेति अतश्च प्राप्तिसापेक्षत्वात्प्रतिषेधानामनुयाजेषु येयजामहप्रतिषेधेन स्यात्तत्र प्राप्तिर्व-
क्तव्या सा न तावद्धननादाविव रागतः संभवति अतो यजतिषु येयजामहं करोतीति शास्त्रात्सा वक्तव्या शास्त्रप्राप्तस्य च निषेधविकल्पः स्या
च्छास्त्रेण भ्रांतिनिमित्तरागस्येव शास्त्रांतरस्यात्यंतबाधायोगात् न च पदशास्त्रेणाहवनीयशास्त्रस्येव नानुयाजेष्विति विशेषशास्त्रेण यज
तिषु येयजामहं करोतीति सामान्यशास्त्रस्य बाधः स्यादिति वाच्यम् शास्त्रयोर्हि न तत्र बाध्यबाधकभावो यत्र परस्य निरपेक्षता न हि पदशास्त्र-
स्य स्वार्थविधानार्थमाहवनीयशास्त्रापेक्षास्ति निषेधशास्त्रस्य तु प्रसक्त्यर्थं यजतिषु येयजामहं करोतीति विधेरस्त्यपेक्षा एवं च निषेधशा-
स्त्रस्य विशेषविषयत्वेन प्राबल्यवद्विधिशास्त्रस्याप्युपजीव्यत्वेन प्राबल्यमस्तीति न निषेधेन विधेरत्यंतबाधो युक्त इति विहितप्रतिषिद्धत्वा
द्विकल्पः स्यात्स च न युक्तः विकल्पे हि पक्षे शास्त्रस्याप्रामाण्यं भवति न ह्यनुयाजेषु येयजामहकरणे नानुयाजेष्वित्यस्य प्रामाण्यं संभवति
व्रीह्यनुष्ठानसमय इव यवशास्त्रस्य द्विरदृष्टकल्पना च स्याद्विधेर्हि एवं ज्ञायते यदनुयाजेषु येयजामहकरणे कश्चनोपकारो भवतीति नि राम
षेधाच्च तदकरणादिति ज्ञायते अनृतवदनाकरणादिकदर्शपूर्णमासयोः स चोपकारोऽदृष्टरूप इति द्विरदृष्टकल्पनाप्रसंगः अतश्च विकल्पो २९

नुयुक्तः प्रतिषेधाश्रयणे च तदायजेर्न तदाश्रयणं किंतु नञः अनुयाजशब्देन संबंधमाश्रित्य पर्युदास आश्रीयते तेन नञनुयाजशब्दाभ्यामनुयाज
व्यतिरिक्तलक्षणात् अनुयाजव्यतिरिक्तेषु येयजामहं करोतीत्यत्रच वाक्ये येयजामहः कर्तव्यतया न विधीयते यजतिषु येयजामहं करोती
त्यनेनैव विहितत्वात् किंतु सामान्यशास्त्रविहितयेयजामहानुवादेन तस्यानुयाजव्यतिरिक्तविषयता विधीयते यद्यजतिषु येयजामहं क
रोति तदनुयाजव्यतिरिक्तेष्विति एवंच सामान्यशास्त्रस्य विशेषापेक्षिणः नानुयाजेष्वित्यनेनानुयाजव्यतिरिक्तविषयसमर्पणादनुयाजव्य
तिरिक्तेषु येयजामहः कर्तव्यतया प्राप्तः अनुयाजेषु तु स न कर्तव्यतया प्राप्तो न वा प्रतिषिद्ध इति न विकल्पः लक्षणया चानुयाजव्यतिरिक्त॰
विषयसमर्पणान्नानुयाजेष्विति वाक्यस्य नाप्रामाण्यमतश्च पर्युदासाश्रयणे न किंचिद्बाधकं तत्सिद्धं नानुयाजेष्विति वाक्ये विकल्पभयात्प
र्युदासाश्रयणमिति ननु पर्युदासाश्रयणे यजतिषु येयजामहं करोतीति शास्त्रेण यागसामान्ये प्राप्तस्य येयजामहस्य नानुयाजेष्वित्यनेनानु
याजव्यतिरिक्ते संकोचनात् पर्युदासस्योपसंहाराभेदः स्यादुपसंहारे हि सामान्यप्राप्तस्य विशेषे संकोचो भवति यथा पुरोडाशं चतुर्धा करो
तीति पुरोडाशसामान्ये प्राप्तं चतुर्धाकरणमाग्नेयं चतुर्धा करोतीत्याग्नेये संकोच्यत इति चेन्न तन्मात्रसंकोचार्थत्वादुपसंहारस्य तदन्यमा
त्रसंकोचार्थत्वात् पर्युदासस्येति केचित् अन्ये तु उपसंहारो नाम सामान्यतः प्राप्तस्य विशेषसंकोचनरूपो व्यापारविशेषो विधेः पर्युदासः स वि
ज्ञेयो यत्रोत्तरपदेन नञित्यभियुक्तोक्त्या प्रत्ययातिरिक्तेन धातुना वा नाम्ना वा नञः संबंधः अत अनयोस्तावत्स्वरूपतः स्पष्ट एव भेदः एवं सत्य
प्यभेद आशंक्येत यदि यत्र पर्युदासो विहितस्तत्रावश्यमुपसंहारः स्यात् नचैतदस्ति नेक्षेतोद्यंतमित्यादौ सत्यपि तस्मिन्नुपसंहाराभावात्
नहि तत्राग्नेयचतुर्धाकरणमिव सामान्ये प्राप्तं किंचिद्विशेषे संकोच्यते पापक्षयोद्देशेनानीक्षणसंकल्पमात्रविधानात् प्रकृतोदाहरणे त्वनुया
जिसामान्ये प्राप्तस्य येयजामहस्यानुयाजव्यतिरिक्तेषु संकोचनाद्यदि विधेरुपसंहारविधित्वं भवति नैतावता किंचिद्विरुध्यते विध्यभावे हि

कथंविधिकार्यमुपसंहारः पर्युदासेनक्रियतेइतिभवतिविरोधः नचात्रविधिर्नास्तिनञोनुयाजपदसंबंधेनविधेर्विधायकत्वस्याख्यापनात् अत्र
हिपर्युदासोनुयाजव्यतिरिक्तविषयसमर्पकः आग्नेयपर्युदासवदुपसंहारकस्तु विधिरेवनचात्रतन्मात्रसंकोचाभावान्नोपसंहारइतिकोर्थः
आग्नेयमात्रेसंकोचोवासामान्यप्राप्तस्यविशेषमात्रेसंकोचोवाआद्येऽनारभ्याधीनसप्तदशस्यमित्रविंदादिप्रकरणस्थेनवाक्येनोपसंहा॰
रेनस्यादाग्नेयेसंकोचाभावाद्द्वितीयेचतुर्द्धाकरणस्यपुरोडाशमात्रेप्राप्तस्याग्नेयेसंकोचवत् अनुयाजाननुयाजसाधारण्येनप्राप्तस्यान
नुयाजेषुसंकोचादुपसंहारःस्यादेवएतावांस्तुविशेषः आग्नेयादिवाक्येषुआग्नेयपदयोविशेषाःस्वपदोपस्थिताः प्रकृतेतुपर्युदासेनतः
स्योपस्थितिरिति उपसंहारन्यायस्त्वविशिष्टएवयच्चतदन्यमात्रसंकोचनार्थत्वात्पर्युदासस्येति तत्रनेक्षेतेत्यत्रसत्यपिपर्युदासेसंकोचाभा
वान्नत्वसामान्येप्राप्तंतदन्यमात्रेसंकोच्यतेसंकल्पमात्रविधानादित्यास्तांनावत् तत्सिद्धम् नानुयाजेष्वित्यत्रविकल्पप्रसक्त्यापर्युदासा
श्रयणमिति यत्रतुसआश्रयितुंनशक्यतेतत्रतत्प्रसक्तावपिनिषेधएवाश्रीयते यथानातिरात्रेषोडशिनंगृण्हातीत्यत्रनह्यतिरात्रेषोडशि
नंगृह्णातीतिशास्त्रप्राप्तमतिरात्रेषोडशिग्रहणंप्रतिषिध्यतेइतिविहितप्रतिषिद्धत्वाद्विकल्पप्रसक्तावपिपर्युदासोनाश्रीयतेऽशक्यत्वात्
यदीत्यत्रनञःषोडशिपदेनसंबंधःस्वीक्रियेतनदानिरात्रेषोडशिव्यतिरिक्तंगृण्हातीतिवाच्यार्थःस्यात्तत्रचातिरात्रेषोडशिनंगृण्हातीतिप्रत्यक्ष
श्रुतिविरोधःअतएवातिरात्रपदेननञःसंकोचोतिरात्रेषोडशिनंगृह्णातीतिप्रत्यक्षविरोधात् अतश्चात्रपर्युदासस्यानुपपत्तेर्निषेधएवस्वी
क्रियतेविकल्पास्वीक्रियतअनन्यगतेः अतश्चैतत्सिद्धम् यत्रतस्यव्रतमित्याद्युपक्रमःविकल्पप्रसक्तिश्चनास्तितत्रप्रतिषेधोयथानकलंजंभ
क्षयेदितियत्रवाविकल्पप्रसक्तावपिपर्युदासआश्रयितुंनशक्यतेतत्रप्रतिषेधःयथानातिरात्रेषोडशिनंगृण्हातीतिएतावांस्तुविशेषः यत्रविक 
ल्पापादकःप्रतिषेधःतत्रप्रतिषिध्यमानस्यवानर्थहेतुत्वमुभयोरपिविधिनिषेधयोःक्रत्वर्थत्वात् यत्रतुनविकल्पःप्रसज्यतेप्राप्तिश्चरागतः 

प्रतिषेधश्च पुरुषार्थं तत्र निषिध्यमानस्य नानर्थहेतुत्वं यथा कलंजभक्षणस्य दीक्षितो न ददाति न जुहोतीत्यादिषु दानहोमादीनां शास्त्रप्राप्तावपि पुरुषार्थत्वेन प्राप्तत्वात् क्रत्वर्थत्वेन च प्रतिषेधात्तुल्यार्थत्वाभावेन विकल्पाप्रसक्तावपि न तेषामनर्थहेतुत्वं रागप्राप्त्यभावाद्रागतः प्राप्तस्यापि क्रत्वर्थत्वेन प्रतिषेधे तदनुष्ठानान् क्रतोर्वैगुण्येनानर्थोत्पत्तिः यथा स्वस्त्र्युपगमनादिप्रतिषेधो रागतः प्राप्तस्य पुरुषार्थत्वेन प्रतिषेधे निषिध्यमानस्यानर्थहेतुत्वमिति दिक् तत्सिद्धं निषेधानां पुरुषार्थानुबंधित्वम् एवं सर्वस्यापि वेदस्य पुरुषार्थानुबंधित्वम् प्रकृतमनुसरामः तदेवं यथा विध्यादीनामध्ययनविध्युपात्तानां नर्थक्यमेवमर्थवादानामपि तदुपात्तत्वेनानर्थक्यानुपपत्तेः स्वार्थप्रतिपादने च प्रयोजनाभावाल्लक्षणया प्रयोजनवदर्थपर्यवसानं वक्तव्यं ते चार्थवादाः द्विविधाः विधिशेषा निषेधशेषाश्च तत्र वायव्यं श्वेतमालभेतेत्यादिविधिशेषाणां वायुर्वै क्षेपिष्ठा देवतेत्यादीनामर्थवादानां विधेयार्थस्तावकतयार्थवत्त्वं बर्हिषि रजतं न देयमित्यादिनिषेधशेषाणां सोरोदीदित्यादीनामर्थवादानां तु निषेध्यनिन्दकतयेति अतश्च लक्षणया प्राशस्त्यमर्थवादैर्बोध्यते तच्च प्राशस्त्यज्ञानं शब्दभावनायामितिकर्तव्यतात्वेन संबध्यते परमप्रकृतम् तत्सिद्धं वक्ष्यमाणार्थभावनाभाव्यकालिङ्गादिज्ञानकरणिका प्राशस्त्यज्ञानेतिकर्त्तव्यता शाब्दी भावना लिङ्त्वांशेनोच्यत इति ननु केयं शाब्दी भावना उच्यते पुरुषप्रवृत्त्यनुकूलो व्यापारविशेषः स एव विध्यर्थः लिङादिश्रवणे यं मां प्रवर्तयतीति नियमेन प्रतीतेः यत्तु इष्टसाधनत्वं लिङर्थस्तत्र तथा सति इष्टसाधनमिति शब्दस्य विधिशब्दः पर्यायः स्यात् न च पर्यायत्वं युज्यते संध्योपासनं ते इष्टसाधनं तस्मात्त्वं कुर्विति सहप्रयोगात् पर्यायाणां च सहप्रयोगाभावात् अतश्च व्यापारविशेष एव विध्यर्थः स च लोके पुरुषनिष्ठोऽभिप्रायविशेषः वेदे तु पुरुषाभावाच्छब्दनिष्ठ एव प्रेरणापरपर्याय इत्युक्तं ननु लोके शब्दनिष्ठप्रेरणापरपर्यायव्यापारे शब्दप्रयोगाभावेन शक्तिग्रहाभावात्कथं तस्य विधिशब्दात्प्रतीतिरिति चेत्सत्यमेतत् तथापि बालस्तावत्स्तनपानादौ स्वरोदनादिजनितमातृप्रवृत्तेः स्वाभिप्रायरूपप्रवर्तनाज्ञा

न्या·मी· नजन्यत्वावधारणात्सविधिकप्रयोजकवाक्यश्रवणसमनन्तरभाविनीं प्रयोज्यवृद्धप्रवृत्तिमुपलभ्य तत्कारणत्वेन तस्य प्रवर्तनाज्ञानमनुमि-
३१ मीते यद्यपि भोजनादौ प्रवृत्तेः समीहितसाधनताज्ञानपूर्वकत्वावधारणात्प्रयोज्यवृद्धप्रवृत्तेरपि तत्पूर्वकत्वाध्यवसानं युक्तम् तथाप्यन्यप्रेरि
तप्रवृत्तौ प्रवर्तनाज्ञानजन्यत्वस्योक्तमात्प्रवृत्तौ दर्शनेन प्रयोज्यवृद्धप्रवृत्तेरप्यन्यप्रेरितप्रवृत्तित्वात्तत्कारणत्वेन प्रवर्तनाज्ञानस्यैवाध्यवसा
नं तच्च प्रवर्तनाज्ञानमन्वयव्यतिरेकाभ्यां प्रयोजकवाक्यजन्यमित्यवधारयति तत्र चावापोद्वापाभ्यां प्रवर्तनायां विधिशक्तिमवधारयति प्रवृत्त्य
नुकूलो व्यापारः प्रवर्तना स च व्यापारः प्रैषादिरूपो विविध इति प्रत्येकं व्यभिचारित्वाद्धि विधिशब्दवाच्यत्वानुपपत्तेः प्रवर्तनासामान्यमेव विधि
शब्दवाच्यमिति कल्पयति एवं च विधिश्रवणे प्रैषादिरूपस्य वक्त्रभिप्रायस्य प्रवर्तनात्वेनैव रूपेण प्रतीतिर्न विशेषरूपेण तथैव शक्तिग्रहाद्विशे
षरूपेण तु प्रतीतिर्लक्षणयैव एवं च वैदिकलिङ्गादिश्रवणेऽपि प्रवर्तनासामान्यमेव प्रतीयते तत्र कोऽसौ व्यापार इत्यपेक्षायां प्रैषादिरूपस्य वक्त्र
भिप्रायस्यापौरुषेये वेदेऽनुपपत्तेः शब्दनिष्ठ एव प्रेरणापरपर्यायः कश्चिद्व्यापार इति कल्प्यते अतश्च शब्दनिष्ठ एव प्रेरणापरपर्यायो व्यापारः शा
ब्दी भावना सैव प्रवर्तनात्वेन रूपेण विध्यर्थ इति अयमेव चार्थोऽभिधाभावनामाहुरन्यामेव लिङ्गादय इति वार्तिकस्याभिधीयते अनेनेति व्युत्पत्त्या
ऽभिधाशब्देन शब्द उच्यते तद्व्यापारात्मिका भावना लिङ्गवाच्येति केचिदाहुः अन्ये त्वाहुः सत्यं प्रवर्तनासामान्यं विध्यर्थः तथैव शक्तिग्रहात्प्रवृत्त्य
नुकूलश्च व्यापारः प्रवर्तना ऽपौरुषेये च वेदे प्रैषादेरसंभवात्कश्चित्पुरुषप्रवृत्त्यनुकूलो व्यापारविशेषः कल्पनीयः विधिशब्दाभिधेयप्रवर्तना
सामान्यस्य विशेषमंतरेणाऽपर्यवसानात्तत्र कोऽसौ व्यापार इत्यपेक्षायां धात्वर्थगतं समीहितसाधनत्वमेवेति कल्प्यते तस्यापि प्रवृत्त्यनुकूल
त्वात्सर्वो हि समीहितसाधनतां ज्ञात्वा प्रवर्तते अन्यप्रेरितो यदीष्टसाधनतां न जानाति तदा नैव प्रवर्तते स्वतंत्रप्रेरणावादेऽपि तदाक्षिप्तसमीहि राम
तसाधनताज्ञानं स्वीक्रियत एव अन्यथा विधेः प्रवर्तकत्वानुपपत्तेः अतश्चावश्यकत्वात्समीहितसाधनतैव प्रवर्तनात्वेन रूपेण विध्यर्थः ए ३१

वेच विधिशब्दस्यान्यनिष्ठत्वव्यापारबोधकत्वं लोकसिद्धसिद्धं भवति किंच एको व्यापारः स्पंदाद्यतिरिक्तः कल्पनीयः तस्य च स्वप्रवृत्तौ पराधीन प्रवृत्तौ वा कारणत्वेनाक्लृप्तस्य प्रवर्तनात्वेन रूपेण ज्ञातस्य प्रवृत्त्यनुकूलत्वं शब्दस्य च परनिष्ठव्यापारज्ञापकत्वेन क्लृप्तस्य स्वनिष्ठव्यापारबोधकत्वम् विधेश्च प्रवर्तकत्वनिर्वाहार्थं धात्वर्थस्य समीहितसाधनत्वमिति कल्पनाद्वरमावश्यकस्यैव समीहितसाधनत्वस्य स्वप्रवृत्तिहेतुत्वेन क्लृप्तस्य प्रवर्तनात्वेन रूपेण विध्यर्थत्वकल्पनं लाघवात् अन्यनिष्ठत्वाच्च न च विधेः प्रवर्तकत्वनिर्वाहार्थं समीहितसाधनत्वकल्पनास्वैर्णानभिधाने च विधेः प्रवर्त्तकत्वाभावाद्धात्वर्थस्य समीहितसाधनत्वकल्पकमेव नास्तीति वाच्यम् प्रवर्तनाभिधानेनैव तन्मतेपि विधेः प्रवर्तकत्वाद्वि॰ध्यभिहितस्य प्रवर्तनासामान्यस्य विशेषमंतरेणापर्यवसानात्समीहितसाधनत्वाक्षेपकत्वात् न चेष्टसाधनत्वस्य विध्यर्थत्वे संध्योपासनं ते इ॰ष्टसाधनं तत्त्वं कुर्विति सहप्रयोगानुपपत्तिरिति वाच्यम् इष्टसाधनत्वस्य विशेषरूपेण विधिनानभिधानात् प्रवर्तनात्वेन रूपेणाभिधानात्सा॰मान्यशब्दस्य च विशेषशब्देन दृष्टः सहभावः पांचालराजा द्रुपद इत्यादौ तस्मात्समीहितसाधनतैव प्रवर्तनात्वेन रूपेण विध्यर्थः सैव च तेन रूपेण शब्देनैवाभिधीयत इति शाब्दी भावना उक्तवार्तिकस्यापि अयमेवाभिप्रायः अभिधीयते साऽभिधा समीहितसाधनता सैव प्रवर्तनाभिहिता पुरुषप्रवृत्तिं भावयतीति भावनां तां लिङादय आहुरिति यथाहुः पुंसां नेष्टाभ्युपायत्वात्क्रियास्वन्यः प्रवर्तकः प्रवृत्तिहेतुं धर्मं च प्रवदंति प्रवर्तनामिति तत्सिद्धम् यजेतेत्यत्र लिङ्त्वांशेन शाब्दी भावनोच्यत इति आख्यातांशेनार्थी भावनोच्यते ननु केयमार्थी भावना कर्तृव्यापार इति चेन्न यागादेरपि तद्द्रव्यव्यापारत्वेन भावनात्वोपपत्तेः न चेष्टापत्तिः तस्य प्रकृत्यर्थत्वेन प्रत्ययार्थत्वाभावादिति चेदत्राहुः सत्यं न यागो भावना किन्तु स्वर्गेच्छाजनितो यागविषयो यः प्रयत्नः सा भावना सैव चाख्यातांशेनोच्यते यजेतेत्याख्यातश्रवणाद्यागे यजेतेति प्रतीतेर्जायमानत्वाद्यश्च प्रयत्नपूर्वकं गमनादि करोति तस्मिन्देवदत्तो गमनं करोतीति करोति प्रयोगदर्शनाद्धानादिना स्पंदमानेन तु नायं करोति किंतु वातादिना॰

स्यस्पंदो जायत इति प्रयोगात्करोत्यर्थस्तावत्प्रयत्नः करोति सामानाधिकरण्यं चाख्यातेन दृश्यते यजेत यागेन कुर्यात्पचति पाकं करोति गच्छति गमनं
करोतीति अतश्च करोति सामानाधिकरण्यात्प्रयत्नस्याख्यातवाच्यत्वम् न च रथो गच्छतीति प्रयोगानुपपत्तिः रथे यत्नाभावादिति वाच्यम् वो
ढुरवगतं रथे आरोप्य प्रयोगोपपत्तेः यन्मतेप्यन्योत्पादानुकूलं व्यापारसामान्यं भावना तन्मतेपि रथे गमनातिरिक्तव्यापारानुपलब्धेः रथो ग
च्छतीति प्रयोगस्योपचारिकत्वमेकमेवेति अतश्च प्रयत्न एवार्थीभावना यथाहुः प्रयत्नव्यतिरिक्तार्थभावना तु न शक्यते वक्तुमाख्यातवाच्ये
ह प्रसक्ते तत्सुपरम्यते इति अन्ये त्वाहुः भवितुर्भवनानुकूलो भावुकव्यापारस्तावद्भावना यस्मिन्व्यापारे कृते करणं फलोत्पादनाय समर्थीभ
वति तादृशो व्यापार इति यावत्स एव चाख्यातार्थः कुठारेण छिनत्तीत्याख्यातश्रवणे हि भवत्येतादृशी मतिः कुठारेण तथा व्याप्रियेत यस्मि
न्व्यापारे कृते कुठारेण छेदनं भवतीति एवं यजेत स्वर्गकाम इत्यस्यायमर्थः यागेन तथा व्याप्रियेत यस्मिन्व्यापारे कृते यागात्स्वर्गो भवती
ति स च व्यापारः क्वचिदुद्यमननिपतनादिः क्वचिच्चाग्न्यन्वाधानादि ब्राह्मणतर्पणान्तः कथंभावाकांक्षायां विशेषरूपेण पश्चादवगम्यते
अन्योन्यादानुकूलत्वेन सामान्यतस्त्वाख्यानादेव रथो ग्रामं गच्छतीत्यत्रापि आख्यातेन ग्रामप्राप्त्यनुकूलो व्यापार एव प्रतीयते रथस्तथा गम
ने व्याप्रियते यस्मिन्व्यापारे कृते गमनाद्ग्रामप्राप्तिर्भवतीति प्रतीतिः न त्वत्र गमनमात्रमाख्यातार्थः तस्य धातुनोक्तत्वात्तत्र कोसौ व्यापार इत्य
पेक्षायां पूर्वोक्त एवांतरदेशविभजनसंयोजनरूप इति पश्चादवगम्यते पूर्वेण प्रदेशेन विभज्योत्तरेण संयुज्य रथो ग्रामं गच्छतीति प्रयोगा
त् उद्यम्य निपात्य कुठारेण छिनत्तीतिवद्देवदत्तः प्रयतते इत्यत्रापि देवदत्तस्तथा व्याप्रियते यथा प्रयत्नो भवतीति प्रयत्नानुकूलो व्यापा
र एवाख्यातार्थो न तु प्रयत्नः तस्य धातुनोक्तत्वात् व्यापारविशेषापेक्षायां चेच्छादिः पश्चादवगम्यते उद्यमननिपतनवत्तथा च सर्वत्रानुग
तत्वादन्योत्पादानुकूलव्यापारसामान्यमेवाख्यातार्थः न तु प्रयत्नमात्रं रथो गच्छती देवदत्तः प्रयतत इत्यादिषु तदभावात् न चात्रौपचारि

कर्तृत्वं वक्तुं युक्तं मुख्ये संभवति तस्यान्याय्यत्वात् करोत्यर्थोऽप्युत्पादानुकूलो व्यापार एव प्रयत्नमात्रं करोतेश्चेतनतीचेतनकर्तृकाख्यानसामानाधिकरण्यादिति तस्मिन्नूनमन्योत्पादानुकूलो व्यापारोऽर्थी भावनेति सैव च यजेतेत्यत्राख्यातांशेनोच्यते भावयेदिति तस्याश्च भाव्याकांक्षायां स्वर्गादिर्भाव्यत्वेन संबध्यते करणाकांक्षायां यागादिः करणत्वेन संबध्यते प्रयाजादय इति कर्तव्यतात्वेनैवं च यजेतेत्यादिना स्वर्गाद्युद्देशेन यागादेर्विधानात्सिद्धं यागादेर्धर्मत्वम् प्रयोजनमुद्दिश्य वेदविहितत्वादिति सोऽयं धर्मो यदुद्देशेन क्रियमाणस्तद्धेतुः श्रीगोविन्दार्पणबुद्ध्या क्रियमाणस्तु निःश्रेयसहेतुः न च तदर्पणबुद्ध्यानुष्ठाने प्रमाणाभावः यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणमिति स्मृतेः अस्याश्चाष्टकादिवत्प्रामाण्यादित्यन्यत्र विस्तरः क्वाहं मन्दमतिः क्वेयं प्रक्रिया भट्टसंमता तस्माद्भक्तेर्विलासोऽयं गोविन्दगुरुपादयोः १ यन्त्ररूपो मदीयोऽयं वाग्व्यापारः स्फुरोऽभवत्। अनेन प्रीयतां देवो गोविन्दो भक्तवत्सलः ॥२॥ इति श्र्यानन्ददेवसूनुनाऽऽपदेवेन कृतं मीमांसान्यायप्रकाशसंज्ञकं मीमांसाप्रकरणं समाप्तिमगात् ॥ ॥ वाराणसीप्रसादस्य नियोगेन प्रयत्नतः ॥ काशीसंस्कृतमुद्रायामंकितोयं शिलाक्षरैः ॥१॥ श्रीकाशीजीमे ज्ञानवापी के पूर्व फाटकपर श्रीविश्वनाथजीके पास महाराज शिवलाल दुबेजी इनके मकानमे काशी संस्कृतमुद्रायंत्रमे छपी जिनको लेना होय उन्होने इस छापेखानेके कार्यसंपादक श्रीयुत् बाबू वाराणसीप्रसाद या कचौरीगलीमे भाई प्रतापसिंहजीके दुकानमे मिलेगी ॥ मिति श्रावण कृष्ण १२ गुरुवासरे सम्वत् १९३२ ता: २९ माहे जुलाई सन १८७५ ई॰

इतिआपोदेवीमीमांसान्यायप्रकाशःसमाप्तिमगमत्